# अरुणा

(उपन्यासः)

डॉ. महेशचन्द्रशर्मा गौतमः



हरियाणा संस्कृत अकादमी

पंचकूला

पूर्वमहमचिचिन्तं नानाकार्याग्रह ग्राहग्रस्तोऽहं कालाभववशात् कञ्चनांश मेवास्य वाचयितुं शक्ष्यामि, परं यदा वाचनं प्रारब्धं तदा परिसमाप्तिं यावद्वाचनं मे प्रावर्ततैव। एतत्कथानकस्यैतदीयस्य रुचिकरत्वं शैल्याश्चास्य रमणीयत्वं प्रमाणयति। मनोहरोऽत्र वाचां विन्यासः प्रतिपादना च मनोहरतरा। एतद् ग्रन्थरत्न प्रणयनार्थं सुतरामभिनन्दनार्हा भवन्तः। सर्वथा निर्दुष्टेयं कृतिर्विद्वत्कराङ्गुलि प्रणयितां यायादिति समासेनैव स्वं वच उपन्यस्य विरमाम्यहम्।

डॉ. सत्यव्रतः शास्त्री

कुमार्याः सन्ततिजननं न केवलं भारते अपितु पाश्चात्त्यदेशेष्वपि तस्याः कृते विषमां स्थितिं जनयति। तत्र गर्भस्थापयिता पिता तया सह परिणयाय बाध्यते, परं भारते विशेषेण हिन्दुसमाजे स्थितिः सर्वथा भिन्ना। अत्र तु तादृशी नारी सर्वथा गर्हिता मन्यते, तस्याः सन्ततेस्तु स्थितिर्नितरां शोचनीया भवति। एतस्याः स्थितेः प्रकाशे तथा वञ्चिताया नायिकाया अरुणाया मानसी दशा कीदृशी स्यात् स्फुटं लेखकेनात्र सा वर्णिता।

डॉ. शिवप्रसादो भारद्वाजः

इस कृति के रूप में गीर्वाण भारती की सेवा में किया गया यह मेरा विनम्र प्रयास आपके आशीर्वाद के लिए सप्रश्रय प्रेषित है।

महेश गौतम

पूर्वमहमचिचिन्तं नानाकार्याग्रह ग्राहग्रस्तोऽहं कालाभववशात् कञ्चनांश मेवास्य वाचयितुं शक्ष्यामि, परं यदा वाचनं प्रारब्धं तदा परिसमाप्तिं यावद्वाचनं मे प्रावर्ततैव। एतत्कथानकस्यै तदीयस्य रुचिकरत्वं शैल्याश्चास्य रमणीयत्वं प्रमाणयति। मनोहरोऽत्र वाचां विन्यासः प्रतिपादना च मनोहरतरा। एतद् ग्रन्थरत्न प्रणयनार्थं सुतरामभिनन्दनार्हा भवन्तः। सर्वथा निर्दुष्टेयं कृतिर्विद्वत्कराङ्गुलि प्रणयितां यायादिति समासेनैव स्वं वच उपन्यस्य विरमाम्यहम्।

डॉ. सत्यव्रतः शास्त्री

कुमार्याः सन्ततिजननं न केवलं भारते अपितु पाश्चात्त्यदेशेष्वपि तस्याः कृते विषमां स्थितिं जनयति। तत्र गर्भस्थापयिता पिता तया सह परिणयाय बाध्यते, परं भारते विशेषेण हिन्दुसमाजे स्थितिः सर्वथा भिन्ना। अत्र तु तादृशी नारी सर्वथा गर्हिता मन्यते, तस्याः सन्ततेस्तु स्थितिर्नितरां शोचनीया भवति। एतस्याः स्थितेः प्रकाशे तथा वञ्चिताया नायिकाया अरुणाया मानसी दशा कीदृशी स्यात् स्फुटं लेखकेनात्र सा वर्णिता।

डॉ. शिवप्रसादो भारद्वाजः

इस कृति के रूप में गीर्वाणभारती
की सेवा में किया गया यह मेरा विनम्र
प्रयास आपके आशीर्वाद के लिए
सप्रश्रय प्रेषित है।

महेश गौतम

# अरुणा

## ( उपन्यासः )



प्रणेता

डॉ. महेशचन्द्र शर्मा गौतमः

सम्पादकः

डॉ0 सुधीर कुमारः

निदेशकः, हरियाणा संस्कृत अकादमी




हरियाणा संस्कृत अकादमी, पंचकूला

© लेखकः - डॉ. महेशचन्द्र शर्मा गौतमः
गौतम मार्किट, सनौरी गेट, पटियाला
फोन : 0175-2220139
मोबाइल : 09781124775

सम्पादकः - डॉ. सुधीरकुमारः

प्रकाशकः - हरियाणा संस्कृत अकादमी
अकादमी भवन, पी-16, सेक्टर 14,
पंचकूला - 134113
फोन : 0172-2570979

प्रथम संस्करण - 2012

प्रतियां - 500

मूल्य - 200

---

मुद्रकः
रेशमा प्रिंटर्स, चण्डीगढ
मो0-9872277033

# समर्पणम्

प्रात:स्मरणीयानामभ्यर्हणीयानां
पटियालास्थराजकीयसंस्कृतमहाविद्यालयस्य*
भूतपूर्वप्रधानाचार्याणां
विद्याविनयशीलशिक्षकाणां
महिमशालिनाम्प्रकाण्डविदुषां
गोलोकवासिनाम् आचार्यप्रवराणां
वैयाकरणानां
**पण्डितदुर्गादत्तवाग्मिनां**
श्रीचरणयो:
एषा मे कृति: सविनयं समर्प्यते

* * *

---

* Govt. Institute of Oriental and Modern Indian Languages, Patiala

# प्रस्तावना

श्रीभृता डॉ. महेशगौतममहाभागेन प्रणीतः अरुणाभिधेयोऽयमुपन्यासो मया आमूलचूलं पठितः। अत्र हि अरुणाख्या एका युवतिः, गान्धर्वविवाहच्छलेन तां सगर्भां कृत्वा सम्पल्लोभेन च तां परित्यत्य अमेरिकां गतेन प्रमोदाभिधानेन केनचिद् यूना वञ्चिता सति गर्भस्रावाय परिजनैः अतिनिर्बन्धेन प्रार्थितापि तेषा मुपन्यासं समुपेक्ष्य गृहाद्दूरं शिमलानगरे पितुः मित्रस्य गृहं गत्वा पुत्रम् अजनयत्। ततश्च लोकनिन्दाभयेन पुत्रद्वितीया सा मुम्बईमहानगरीं गत्वा तत्र एकस्मिन् शिक्षाकेन्द्रे आत्मानं राजनीतिशास्त्रस्य प्रतिभासम्पन्ना प्राध्यापिकारूपेण प्रत्यस्थापयत्।

एकस्य राजनेतुः पुत्र्या अपहरणेन बलात्कारेण च क्षुब्धाया, नारीः प्रति अत्याचाराणां विरोधे समुत्थितायाश्च तस्या वाग्वैदग्ध्येन प्रभावितो राजनीतिज्ञो विधानसभासदस्यः कौण्डकरो राजनीतिक्षेत्रे तस्या वैचक्षण्येन आत्मनो हितं साधयितुं गणाधिपतेः साहाय्येन ताम् आकार्य एकस्मिन् महाविद्यालये प्राध्यापिकारूपेण तस्या नियमितां नियुक्तिं कारयित्वा, उपकारबद्धां तां आत्मनः सचिवम् अकरोत्। कौण्डकरस्य सचिवरूपेण राजनीतिक्षेत्रे प्रवृत्ता अरुणा स्वकौशलेन तस्य दलस्य कृते अतिमहत्त्वपूर्णा व्यक्तिरभूत्। तस्याः साहाय्येन कौण्डकरस्य दलम् अभूतपूर्वां सफलतामवाप्नोत्। एवं सा स्वचातुर्येण निर्वाचनेषु साफल्यमधिगमय्य कौण्डकरं महाराष्ट्रराज्यस्य मुख्यमन्त्रिपदं प्रापयत्। प्रशासने तस्या राजनीतिकनैपुण्यस्य लाभं प्राप्तुं कृतज्ञः कौण्डकरः तां गृहमन्त्रिपदे न्ययुङ्क्त।

अमेरिकावासिन्या कामुकया जूह्या तिरस्कृत्य प्रत्याख्यातो मोहभङ्गेन अनुशय तप्तश्च नायकस्तस्याः समीपमागत्य क्षमां प्रार्थयत।

अत्र उपन्यासे अपरिणीताया नार्या विवाहात्पूर्वं प्रणयिना सह शारीरिक सम्बन्धानां दुष्परिणामः, सुशिक्षिताया नार्याः स्वसन्ततेः शुभायतिविषये सतर्कता, मातृत्वस्य महिमा, आधुनिकाया नार्या विशिष्टं सामर्थ्यञ्च इति सर्वं सुष्ठु चित्रितम्। प्राञ्जला, प्रवाहमयी च गौतममहोदयस्य भाषाशैली अत्यधिकं प्रशस्या वर्तते।

संस्कृतभाषायाः संस्कृतसाहित्यस्य च प्रचारप्रसाराय अद्यत्वे युववर्गेण ग्राह्याणां संस्कृतभाषायां रचितानां पुस्तकानां महती आवश्यकता वर्तते। समकालिककथामाश्रित्य रचितः विद्वज्जनैर्ग्राह्यश्चायमुपन्यासः अनया दृशा संस्कृत साहित्ये स्वागतार्हः।

कालभेदेन पठकपाठकभेदेन च सर्वास्वेव भाषासु प्रणयनकार्यं परिवर्तन मपेक्षते। अधुना न वयं सुबन्धुदण्डिबाणयुगे स्मः यस्मिन् क्लिष्टसंस्कृतगद्ये एव विदुषां वैदुष्यं परीक्ष्यते स्म, गद्यञ्च कवीनां निकषम् अकथ्यत, यस्मिंश्च युगे राज्ञां महतां वा कथा अकीर्त्यत। अद्य प्रसन्नं सुगमञ्च संस्कृतम् एव सर्वेभ्यो रोचते, कथावस्तु चापि सामान्यजनगतं सामयिकविषयञ्चाधिकृत्य एव प्रणीतं श्लाघ्यते।

हर्षप्रकर्षस्यायं विषयो यत् अरुणाख्यगद्यमहाकाव्यस्य सुधीः प्रणेता डॉ. महेशगौतममहाभागः सामान्यजनगम्यया गिरा सर्वरुचिरं वस्तु प्रास्तौत्, नवञ्च किञ्चित् पर्युपास्थापयत्। इदञ्च भूयः काम्यते यत् पण्डितप्रवेकाः कृतिमिमां हर्षस्पृशा दृशा सम्भावयिष्यन्ति।

पंजाबसर्वकारेण शिरोमणिसाहित्यकारसम्मानेन समलंकृतो डॉ. महेशगौतम महोदयः साधुवादस्य पात्रम्, अस्योपन्यासस्य प्रकाशनञ्च हरियाणा संस्कृत अकादम्याः कृते गौरवस्य विषयः।

7 जनवरी, 2012.

सुधीर कुमारः
निदेशकः
हरियाणा संस्कृत अकादमी
पंचकूला
Mob. 07696061516

## प्रशस्तिः

महेशेन्दुर्विद्वान् लसति सुतरां काव्यगगने
रसास्वाद्याह्लादां सुकृतिकिरणैर्यच्छति विभाम्।
विभिन्नेष्वङ्गेषु प्रणयति स साहित्यमनिशम्
चिरं जीव्यादेष प्रणयनपरो गौतमकविः।।

विद्वद्वरेण्य डॉ. महेशचन्द्रगौतमस्य पूर्वजा मूलतो हरियाणाप्रदेशनिवासिन आसन्। बहुकालात् पूर्वं ते पञ्चाम्बुप्रदेशस्य प्रसिद्धां नगरीं पटियालां गतवन्तः। अयं परिवारः पाण्डित्यस्य परम्परायां पारङ्गत आसीत्। डॉ. गौतमस्य पितामहः पिता च संस्कृतस्य विद्वांसौ आस्ताम्। अत एव डॉ. गौतमोऽपि सन्ततिसंक्रमणतया संस्कृतस्य विद्वान् वरीवर्तते। एष विदुरः संस्कृतं हिन्दीं पञ्जाबीम् आंग्लभाषाञ्च सम्यक् प्रकारेण जानाति। अनेक भाषावैदुष्यात् अस्य कृतयः सर्वासु भाषासु समुल्लसन्ति।

प्रस्तुतोऽयमरुणाख्य उपन्यासः कथया भाषया भावैः रसैः गुणैरलंकारैः सर्वातिशयेन स्वगौरवमुपन्यस्ति। अस्य प्रशंसायाम् अनेकैर्मूर्धन्यैः संस्कृतस्य विद्वद्भिः पर्याप्तं लिखितम्। अहम् अक्षरश इमं पठितवान्। एतदतीव मे रोचते।

ऋग्वेदस्य दशममण्डले हिन्दीभाष्यं डॉ. महेशगौतमस्य अत्यन्तं महत्त्वपूर्णं कार्यं वर्तते। आचार्यसायणस्य संस्कृतभाष्यमाधृत्य हिन्दीभाषया कृतं कार्यं वैदिकऋचामन्तस्तलस्पर्शिसारम् अवबोद्धुं नितरामुपयोगि विद्यते। एकादशशत पृष्ठेषु विहितमेतत् कार्यं भुवनवाणी ट्रस्ट लखनऊ संस्थया भागद्वयेन प्रकाशितमस्ति। भुवनवाणीन्यासस्य मुख्यो न्यासी विनयकुमारोऽवस्थी डॉ. गौतमम् आधुनिकमहर्षिगौतमोपाधिना विभूषयति।

'मूकं निमन्त्रणम्' कवितासंकलनं डॉ. गौतमस्य समसामयिकसमस्यानां सन्दर्भे सटीकं समीचीनञ्च प्रशस्यतमं कार्यमस्ति। अस्मिन् काव्यसंकलने

'सर्वं खल्विदं ब्रह्म' इत्यत आरभ्य सामाजिककदाचारस्य, दलितानां, दीनानां, महिलानाम्, असहायवृद्धानां, यत्रतत्रव्याप्तभ्रष्टाचाराणाञ्च सुसङ्गतं चित्रणं कृतवान् कविरेषः। कवेः काश्चन कविताः काव्यसुषमां सुतरां प्रकटयन्ति। कविवरः छन्दसां पारम्परिकपद्धतिं विहाय स्वतन्त्रमुक्तशैलीमाश्रित्य कविताः कवयति। भाषाभावयोः सुन्दरं सामञ्जस्यं सर्वत्र लसति। कविवरे प्रत्नूनूतयोः समावेशोऽद्भुतो वर्तते।

'पंजाब का संस्कृतकाव्य को योगदान', पञ्चाम्बुप्रदेशस्य संस्कृतकाव्ये योगदानस्य समीक्षात्मकम् अध्ययनं प्रस्तुवन्ती कृतिरेषा वस्तुतो महनीया कृतिः वर्तते। अस्यां कृतौ हरियाणाहिमाचलयोर्विदुषः परित्यज्य विभक्तस्य पञ्चाम्बु प्रदेशस्य रचनाकाराणां, तेषां रचनानाञ्च गम्भीरं समीक्षणं समालोचनञ्च विहितम्। एषा कृतिः डॉ. गौतमस्य अद्भुतां प्रतिभां, गहनां समीक्षां श्रमं संलग्नतां च प्रकटयति। पंजाबीभाषायामनूदितं 'संस्कृत काव विच सिख गुरु साहिबान दी महिमा' नामकं लघ्वाकारं पुस्तकमपि विषयदृष्ट्या महत्त्वपूर्णं वर्तते।

एवमेव हिन्दीभाषायां 'श्री गुरु नानक देव चरित' नामकं चरितकाव्यं, 'ऐसे जिया जाता है' हिन्दीकवितासङ्कलनं तथा 'स्वातन्त्र्य समर' नामकं हिन्दीभाषायां रचितं बृहदाकारं प्रकाशनाधीनं महाकाव्यं डॉ गौतमस्य प्रतिभायाः प्रमाणानि सन्ति।

वर्तमान एव २०११ तमे ईसवीये संवत्सरे पंजाबसर्वकारेण 'शिरोमणि संस्कृत साहित्यकार' सम्मानेन समलंकृतो डॉ. महेशगौतमः ममाशीर्वादानां पात्रमस्ति, वैदुष्यञ्चास्य दृष्ट्वा बहुशोऽभिनन्दामि।

विदुषामाश्रवः,

27.11.2011

डॉ. रामेश्वरदत्त शर्मा
उपाध्यक्षः
हरियाणा संस्कृत अकादमी
पंचकूला

## महामहिमसम्पन्नेन राष्ट्रपतिना सम्मानितानां शिरोमणिसाहित्यकारसम्मानेन समलंकृतानां विदुषां शिरोभूषणानां महाकवीनां प्रातःस्मरणीयानां डॉ. शिवप्रसाद भारद्वाजमहोदयानाम् आशीर्वचांसि

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।
नास्ति येषां यशःकाये जरा-मरणजं भयम् ।।

अहो ! अविभाविताच्चिरन्तनात् कालात् कदाचित् प्रावृषि कूलङ्कषा शरदि च धीरप्रवाहा सरिदिवाजस्रं प्रवहन्ती सुरभारतीयं त्रिपथगेव नानापथानाश्रयन्ती भगीरथैरिवानूनैः समुपासकैः सततं प्रसारं नीयमाना रसयति रसिकमनांसि। ऋषीणामृणमिव निर्यातयितुकामैस्तस्याः सेवकैरविरतं प्रस्तूयमानाभिः कृतिभिः तस्या भाण्डागारं मेदस्वितां नीयत एव। तस्मिन्नेव क्रमे शास्त्रि-एम.ए. पी-एच्.डी. प्रभृतिविरुदावलीभिरलंकृतस्य गौतमोपाह्वस्य महेशशर्मणः प्रत्यग्रा कृतिरियमुपन्यासविधामाश्रयन्ती 'अरुणा' संज्ञा परिशीलनायोपस्थिता मम मनो मोदयतितमाम्।

अयं सुधीश्चिरं नवपद्धत्या प्रचलितेषु शिक्षणालयेषु सुचिरं स्वयं साक्षीकृतं सारस्वतं प्रकाशं शिष्येषु सञ्चार्य साम्प्रतं लब्धावकाशः -

अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत्।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत्।।
काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा।।

इति शिष्टैः सदुपदिष्टमनुस्मरन् नवनवसाहित्यसृष्ट्या स्वज्ञानस्यगुणनिकामिवाचरति।

साहित्यं खलु शब्दार्थोपादाना सृष्टिर्या गद्यं पद्यं मिश्रं चेति त्रिषु भागेषु विभक्ता प्राक्तनैराचार्यैः। तत्र गद्यमपि कथाख्यायिकाभेदेन द्विधा विभक्तम्। कथा च विस्तृता संक्षिप्ता चेति पुनर्द्वैविध्यमाश्रयति। तयोः प्रथमा रसभावादि सञ्चारोल्लासा कादम्बरीकारेण परिचायिता। परिवर्तमाने कालप्रवाहे पाश्चात्त्य साहित्येन संसर्गे सति भारतीयानामन्यभाषाणामिव देववाण्याः साहित्यमपि सङ्क्रान्तस्तस्य प्रभावः। अद्यातस्तस्याः कथाया नट्या इव परिवर्तितं नवं रूपमुपन्याससंज्ञया समाजे प्रथितं लोकप्रियञ्च। तस्यादर्शाः स्वस्रोतः प्रकृत्या नुगुण्येन सर्वथा पार्थक्यं भजन्तः शिल्पादिदृशा तं प्राचीनकथातः पूर्णतया भिन्नरूपेण प्रस्तुवन्ति।

साम्प्रतिके युगे साहित्ये देवानां राज्ञां वा चरित्रवर्णनं न मुख्यो विषयः। तत्स्थाने जनसाधारणादेव गृहीतानां पात्राणां साध्वसाधु वा चरितं निरूप्यते। तद्द्वारेण च रचयिता समकालिके लोकजीवने नित्यं साक्षात्क्रियमाणानां समस्यानां स्वरूपं तासां मूलस्यान्वेषणं समाधानाय च मार्गं चिन्तयति। अतो जीवने नित्यमुपस्थितानां संघर्षाणां द्वन्द्वानाञ्च प्रस्तवनं तस्य प्रथमः कल्पः।

पुरातनसाहित्यस्य रसप्रवणतया तत्रापि च शृङ्गारस्य प्राधान्येन तत्र स्त्रीणा मुपस्थितिरनिवार्याभूत्। आधुनिके साहित्येऽपि मानवजीवने नानाभावभावितत्वा दविषमेऽपि कामभावना मानवचरितस्य दुर्बलः पक्षः प्रबलविषयरूपेण प्रस्तूयते। चिरन्तनात् कालात् पुरुषप्रधाने समाजे विविधात्याचाराणां लक्ष्यभूता नारी लेखकस्य समवेदनायाः करुणायाश्च पात्रत्वेनोपवर्ण्यत इत्यस्य वैलक्षण्यम्। प्रायेणाबलात्वेन मताऽपि सा पुरुषादपि सफला सत्युत्कर्षस्य परां काष्ठां भजन्ती लोकस्यादर्शभूता उपवर्ण्यते।

प्रस्तुता कृतिश्च न तस्याः प्रवृत्तेरपवादः। शीर्षकेणैव सूच्यते यथाऽत्र काचिद् अरुणानाम्नी महिला कथावस्तुनः केन्द्रम्। नवसूच्छ्वासेषु विभक्तोऽयमुपन्यास स्तस्या गान्धर्वविवाहच्छलेनान्तर्वत्नीत्वं प्रापय्य सम्पल्लोभेन नायकेन वञ्चनया परित्यक्ताया लोकलज्जावशेन गृहजनं परित्यज्यात्मजद्वितीयाया नानापराधाना मास्पदतया कुख्यातां मुम्बईनगरीं प्राप्य नित्यं संघर्षरतायाः स्वपुरुषार्थेन महाराष्ट्रस्य शासने मन्त्रिपदाधिगतिः पश्चाच्च मरुमरीचिकाचकितस्य मोहभङ्गेनानुशयतसस्य नायकस्य क्षमाप्रार्थनया तेन सह पुनः सङ्गतिरिति कथोपबन्धः सुश्लिष्टतया उपनिबद्धः।

कुमार्याः सन्ततिजननं न केवलं भारतेऽपितु पाश्चात्त्यदेशेष्वपि तस्याः कृते विषमां स्थितिं जनयति। तत्र गर्भस्थापयिता पिता तया सह परिणयाय बाध्यते, परं भारते विशेषेण हिन्दुसमाजे स्थितिः सर्वथा भिन्ना। अत्र तु तादृशी नारी सर्वथा गर्हिता मन्यते, तस्याः सन्ततेस्तु स्थितिर्नितरां शोचनीया भवति। एतस्याः स्थितेः प्रकाशे तथा वञ्चिताया नायिकाया अरुणाया मानसी दशा कीदृशी स्यात् स्फुटं लेखकेनात्र सा वर्णिता।

प्राय एतादृश्यां दशायां लोकलज्जावशात् स्त्रियस्तस्या अवैधसन्ततेरभावं साधयितुं गर्भस्रावं कारयन्ति। विरला एव स्त्रियस्तस्या रक्षणस्य साहसं कुर्वन्ति। अरुणा तासाम् अन्यतमा। पितृभ्यां प्रस्तुतेऽपि तादृशे कर्मणि न सा स्वीकरोति। सम्भवतो ग्रन्थान्ते नायकनायिकयोः पुनः सङ्गतिमवदधता लेखकेन नैतत् कर्मोपन्यस्तम्। तथा कुर्वता तेन नायिकाया मातृत्वस्य महिमा, तस्या वात्सल्यस्य विकासः, काचित् सुशिक्षिता जननी स्वसन्ततेः शुभायतिविषये कथं सतर्का भवति, काचनापरिणीता नारी सन्ततिं प्रसूय कीदृशे सङ्कटे पतति इति सर्वं लेखकेनारुणायाश्चरितद्वारेण दर्शितम्, इति तेनाम्राश्च सिक्ताः पितरश्च तर्पिताः। विकस्वरे यौवने वर्तमानाऽसाधारणस्य लावण्यस्य निधिः साऽऽश्रयहेतोः मुम्बईपुर्यां यां बालसखीं रानीमाश्रयति दैवगत्या तस्याः शशस्य सिंहिकासुताश्रयण मिव तत्कर्म सिद्ध्यति। स्वयं भुजङ्गस्य वशे पतिता तस्य जाल्मस्य हेतोर्विवशा वेश्येव नानोपभोग्या सती कथमाश्रयहेतोरागतायाः सख्याः शरणं भवतु, अपितु तस्या गृहे स्थिताया विषमतरा दशा भविष्यतीत्याशङ्कमानया तया सा लघ्वेव 'सूजी' नाम्न्या महिलाया अतिथिगृहं प्रेषिता। तस्या अपि सम्पर्को यद्यपि नैकैर्भुजङ्गैर्वर्तते तथापि सा स्वाश्रये स्थितानां संरक्षणं करोति। इत्थं रचयित्रा – अनुराधा, अरुणा, रानी, सूजी चेति चतस्रो महिला अत्र प्रस्तुताः। प्रथमा वराकी गुणवता पत्या युक्ता दैववशात् तस्याकालमृत्योर्वैधव्यसागरे पतिता नायिकायाः पितृष्वसृत्वेन मातृतुल्या सती तस्यां सहजं वात्सल्यं भजन्ती तां प्रमोदविषये दृष्टलोकतथ्यतया सतर्कां कर्तुं यतते। परं यथा रागिणीनां मनःस्थितिः प्रायो भवति, प्रणयिनि जातविस्रम्भाऽरुणा न तस्या वचसि सन्तिष्ठते। राजनीतिशास्त्रे प्रवीणाऽपि न सा स्मरति यदस्मिन् कलौ न गान्धर्वविवाहाः प्रमाणीक्रियन्ते, स्वेच्छया परिणयं कुर्वन्तौ प्रणयिनावपि नागरविवाहपद्धत्या (civil marriage) स्वपरिणयं शासनतः प्रमाणयन्ति। तया तु न तथापि कृतम्।

विवाहात् पूर्वं स्त्रीपुरुषयोरङ्गसङ्गो नोचित इति जानन्त्यपि सा कलुषहृदयाय प्रमोदायात्मानं समर्पयति। प्रमोदस्तु तस्या गर्भिणीत्वे प्रकाशमागते परिणयार्थं तस्याः पितरि स्वजननीजनकसमक्षमागते तां शुद्धाचारां वदन्नपि गर्भस्थापनविषये स्वं निर्लिप्तमेव बोधयति। इत्थम् अरुणायास्तस्य च चरितं शकुन्तला-दुष्यन्तयोरिव किञ्चित् संवदते। अनुराधाऽपि केनाऽप्यंशेन गौतमीव प्रतिभाति यस्याः सहजं वात्सल्यं तस्याः स्खलिते ज्ञातेऽपि न मनागपि शैथिल्यं याति। रानी च शरणाशया समागतां सखीं मेयमत्र स्थिता भ्राष्ट्रान्निर्गता चिल्लाया मुखेऽपतत् इति चिन्तयन्ती तस्या मङ्गलं काङ्क्षन्ती अनुसूयया सानुमत्या वा सादृश्यं भजते।

मुम्बईमहानगरी भारतस्यार्थराजधान्यपि भुजङ्गपुर्यपि वर्तते यत्र षिड्गा दस्यव उग्रवादिनश्च प्रचुरसंख्यया वर्तमानाः स्वं समानान्तरं शासनमिव चालयन्ति। मन्त्रिभिरारक्षिभिश्च तेषां संरक्षणं विधीयते। तस्यामेकाकिनी स्तनन्धयद्वितीया सा सालावृकैः परीता घनेऽरण्ये मृगीवात्मनः शीलं रक्षन्ती स्वचातुर्येण वैदुष्येण च परां काष्ठामुत्सर्गस्यासादयत्। समायातेषु नैकेषु तादृशेष्ववसरेषु तस्या लावण्ये सतृष्णेन कौण्डकरेण क्रीडिताऽपि न तस्य कामलिप्साया ग्रासीभवितुमन्वजानात्। एतद्द्वारेण लेखकेन सूचितं यत् स्त्री सावधाना सती स्वचरित्रं रक्षितुं शक्नोति। इत्थं नानानारीचरित्रेषु सत्स्वपि लेखकेन तुलनात्मकं वैषम्यं दर्शितम्।

भारतस्य नेतारः धर्मनिरपेक्षताख्यापनमोहिता एकस्य वर्गस्य प्रत्यक्षीकृतान् अपराधान् अपि उपेक्षमाणा मतप्राप्तिहेतोः संरक्षणं विदधति, तस्य साहाय्येन च परप्रेषिता आतङ्कजनका यदा तदाऽऽतङ्कं जनयन्ति। राजनेतारो भ्रष्टा लोलुपाः सुन्दोपसुन्दन्यायेन मिथः कलहायमानास्तन्त्रं दूषयन्ति, इति समकालिकं तथ्यं रचयित्रा करमरकरकौण्डकरप्रभृतीनां चरित्रेण दर्शितम्। चान्दभाईत्युपनाम्नश्चन्द्र प्रकाशस्य चरिते विकासं प्रदर्श्यारुणया तस्य स्वोपमन्त्रिपदनियुक्तिद्वारेण राज्येऽपराधनियन्त्रणं वर्णयतो लेखकस्य प्रशासनविषये दर्शनं स्फुटीकृतमिव लक्ष्यते।

उपन्यासस्य संवादाः सशक्ताः पात्राणां चरितं मनःस्थितिं च प्रकाशमानेतुं क्षमाः। दक्षिणभारतयात्रावर्णने विविधस्थलानां प्रत्यक्षीकरणमिवोपपादयता रचयित्रा आत्मनो भ्रमणमेव सूचितम्।

अमेरिकाप्रसङ्गे तु स केवलं वैङ्कूवरनगरं निर्दिशति, तत्रत्यभौतिकान्

विशेषान् न वर्णयन् केवलं तत्रत्यानां स्वैरितामेव दर्शयति। अरुणा प्रमोदेन अङ्गसङ्गाय प्रार्थ्यमानाऽऽत्मानं गान्धर्वविवाहे घोषित एवार्पयति यावद् जूही तस्य सम्मुख एव नैकपुरुषैः स्वैरं चुम्ब्यमाना न लज्जते। तेन संभोगकामुकी च अकृतार्था सती तम् अपुमान् इति दुरुपाधिना दूषयति। इत्थं जूह्या अरुणायाश्च चारित्रवैषम्यं स्फुटीकृत्य प्रमोदस्य मनसि जूहीविषये घृणामुत्पाद्य अरुणायाः चारित्रमहिमानमधिकृत्य नायकस्यादरं जनयित्वा नायिकया सह तस्य पुनर्मिलनस्य मार्गः प्रशस्तीकृत इति प्रशस्यं ग्रन्थकर्तुः प्रबन्धकौशलम्।

उपन्यास आदितोऽवसानं यावत् पाठकस्य कौतुकरक्षणं यथापेक्षं विहितम्। कामं प्रत्यक्षं नात्र रसयोजना प्रतीयते परं नायकनायिकयोरादितः प्रवृत्ताऽनुरागो ऽवसानं यावत् यथावत् स्थितः। मध्ये नायकपक्षे शिथिलोऽपि स नायिकायां सुस्थिर एव वर्तते। इत्थं मध्यकालिकवियोगेन विप्रलम्भशृङ्गार एवात्रप्रस्तुतः। 'न विना विप्रलम्भेन संभोगः पुष्टिमश्नुते' इत्यभिरूपवचनेऽवहितेन लेखकेन नायकं स्वस्खलितविषये सानुशयं विधाय विवाहेन द्वयोः संयोगो योजित इति सुखान्तः कथाबन्धः।

अलङ्कारादिक्रीडायामुदासीनो रचयिता न कृत्रिमां वाक्ययोजनां करोति, दीर्घसमासान् परिहरन् यत्र तत्र चूर्णकानेवप्रयुङ्क्ते। अतः प्रसादगुणलालिता कृतिः 'रसेन शय्यां स्वयमभ्युपागता' इति बाणवचनं सत्यापयति।

साहित्यकारो युगपर्यवेक्षकः सन् समाजे किमुचितमनुचितं वा घटते, कथं चापेक्ष्यते इति प्रचिकाशयिषुः सोद्देश्यामेव कृतिं रचयति। इयमपि कन्यकाः, न ताभिर्भावावेशेन परस्य मोहकवचनैश्च मोहिताभिः शीलस्खलनीयम्, संयोगवशाच्च जाते तादृशे दुर्वृत्ते साहसेन विपद उद्धारश्चिन्तनीय, इति निर्दिश्यन्ते। युवकाश्चानायासं प्रचुरवैभवलाभकामनया देशं विहाय विदेशगमनकामनातः, वृथा प्रणयसम्बन्धेभ्यश्च वर्ज्यन्ते। शासकानां कृतेऽपि नायिकाकौण्डकरद्वारेण सन्देशः यत् तेषां प्रथमं कृत्यं दुर्जननियमनद्वारा प्रजानां कश्मलस्य निवारणम्। अतस्ते स्वयमपि दान्ता भवेयुरिति।

इत्थं कृतावस्यां सफलस्योपन्यासस्य लक्षणानि लक्षयित्वा मोमुदानोऽपि शब्दयोजनाविषये किमपि निर्देशमपेक्षे। अस्माकं दैनन्दिने व्यवहारे प्रादेशिकी हिन्दी वा भाषा प्रयुज्यते। केचिच्चाङ्गलीप्रचुरं वाचं प्रयुञ्जते। अतः संस्कृते लिखतामपि तासां भाषाणां प्रभाव आपतति। अतः सत्यावश्यके लेखकस्तानेव

शब्दान् प्रयुङ्क्ते। यथा हिन्द्यां इन्तज़ाम इत्यर्थे व्यवस्था, प्रबन्ध इत्यादयः शब्दाः प्रचलिताः परं संस्कृते शब्दाविमौ क्रमशः निर्णयस्य सातत्यस्य परस्पर सम्बद्धलेखविशेषस्य च वाचकौ। विवक्षितेऽर्थे संविधिः संविधानकं वा प्रयुज्यते।

तथैव जमानत, जामिन इत्यर्थे प्रतिभूतिः प्रतिभूरिति च अश्वघोषेण बुद्धचरिते प्रयुक्तौ। अत्र ग्रन्थे च लेखकेन जामिन इत्यर्थे प्रात्ययिक इति शब्दः प्रयुक्तः। स च भरोसा दिलाने वाला, भरोसामन्द इत्याशयं बोधयन् लक्षणयाभीष्टं भावमपि प्रकटयेत्। विदा करना इत्यर्थेऽत्र अनुमन्त्रित इति शब्दो लभ्यते, परं प्राचीनसाहित्ये प्रस्थापनं, विसर्जनम्, आमन्त्रणम् इति शब्दास्तद्बोधका लभ्यन्ते। 'चक्रवाकवधु! आमन्त्रयस्व सहचरं समुपस्थिता रजनी' इति शाकुन्तलवचनं तत्र प्रमाणम्। विदा मांगना इत्याशय आपृच्छा शब्देन बोध्यते। 'आपृच्छस्व प्रियसखममुम्' इति मेघदूतपद्यमत्र निदर्शनम्। जिगमिषत इच्छास्वीकृतिर् अभ्यनुज्ञा, अनुज्ञातः अनुजानाति इत्यादिभिर्वाच्यते।

इत्थमेकस्य शब्दस्य विभिन्नार्थेषु प्रयोगः पाठकानां भ्रान्तिं जनयति। अत्र ग्रन्थे तु रचयित्रा परिशिष्टेऽभिप्रेतार्थबोधिका सूची योजिता पाठकानां साहाय्यं विधास्यति।

इत्थं प्रकृता कृतिः समकालिकजनाभिरुच्यनुकूला युगानुरूपैर्विचारैः सगर्भा स्वागतार्हा सती सर्वथा गुणगृह्यै रसिकैरभिनन्द्या। अतोऽन्ते -

कादम्बरीपानरसेन पुष्टास्तुष्टाः पुराणत्वगुणेन तस्याः।
न वारुणी-स्वादसमुत्सुकाश्चेन्नवारुणायां कुतुकं भजन्तु।।
विकाससोपानततीस्तरन्ती नित्यं नवोदारपथं जुषन्ती।
सन्द्रब्धृवाणी परिकल्पनेद्धा चिरं बुधान् रञ्जयतु प्रकल्पैः।।

इत्याशासानो विरमति मुधा पल्लवनाद्

विदुषामाश्रवः,

15.7.2011 डॉ. शिवप्रसादो भारद्वाजः

Jnanpith Laureate
Mahamahopadhyaya Vidyavachaspati Vidyamartanda
Prof. Dr. Satya Vrat Shastri
Recipient of Padma Bhushan, Padma Shri & President of India Certificate of Honour
Honorary Professor, Special Centre for Sanskrit Studies
Jawaharlal Nehru University
Formerly Professor and Head, Department of Sanskrit
University of Delhi
Ex-Vice-Chancellor,
Shri Jagannath Sanskrit University, Puri (Orissa)

10.08.2011

प्रिया डॉ. गौतममहाभागाः

स्वस्त्यत्रभवद्भ्यः।

अरुणेत्यभिधानो भवत्प्रणीत उपन्यासो मयाऽऽमूलचूलम्, अक्षरशो, वाचितः। पूर्वमहमचिचिन्तं नानाकार्याग्रहग्राहग्रस्तोऽहं कालाभाववशात् कञ्चनांशमेवास्य वाचयितुं शक्ष्यामि, परं यदा वाचनं प्रारब्धं तदा परिसमाप्तिं यावद्वाचनं मे प्रावर्ततैव। एतत्कथानकस्यैतदीयस्य रुचिकरत्वं शैल्याश्चास्य रमणीयत्वं प्रमाणयति। मनोहरोऽत्र वाचां विन्यासः प्रतिपादना च मनोहरतरा। एतद् ग्रन्थरत्नप्रणयनार्थं सुतरामभिनन्दनार्हा भवन्तः। सर्वथा निर्दुष्टेयं कृतिर्विद्वत्कराङ्गुलि प्रणयितां यायादिति समासेनैव स्वं वच उपन्यस्य विरमाम्यहम्।

सुरसरस्वतीसमाराधनैकव्रतः
डॉ. सत्यव्रतः शास्त्री

डॉ. महेशगौतममहाभागाः
पट्वालयपुरालङ्कारभूताः

**महामहिमसम्पन्नेन भारत-राष्ट्रपतिना पुरस्कृतानां सम्मानितानाञ्च**
**शिरोमणिसाहित्यकारोपाधिना समलंकृतःनां**
**प्रो. देवदत्तभट्टिमहोदयानां**
**डॉ. महेश गौतम-प्रणीतारुणाख्य-गद्यमहाकाव्यमधिकृत्य सम्मतिः**

महेश-गौतम-प्रख्यः सुधीर्महाकविः कृती।
जयत्यग्रासनासीनो विद्वद्वरशिरोमणिः।।१।।

महाकाव्यं महेशस्य नववस्तु-प्रदीपकम्।
रसज्ञानां मुदे भूयात् नवीनरसरञ्जितम्।।२।।

वस्तुविशेषपूर्णञ्च काव्यमिदं रसात्मकम्।
समेषां विदुषामस्तु मनोऽम्भोजविकस्वरम्।।३।।

नामूलं लिखितं किंचित्, न चोक्तमनपेक्षितम्।
सर्व-काव्यगुणोपेतं सकलं रसपूरितम्।।४।।

पिपासिताय वारीव सरुजे चौषधं यथा।
कामिने कामिनी चैव विद्भ्यः काव्यमिदं तथा।।५।।

एतस्य गद्यकाव्यस्य रचिता सम्मतिर्मया।
आद्योपान्तं पठित्वैतत् भूरि निर्वृत-चेतसा।।६।।

किञ्चिदिदं मयाऽलेखि 'अरुणा' काव्यहेतवे।
काव्यप्रणेतुरर्चायाम् अष्टकमिदमर्पितम्।।७।।

जानन् खलु गिरां मान्द्यं भावार्णवं विरम्य च।
सहजाल्पज्ञतां चैव गिरं स्वामुपसंहरे।।८।।

प्रो. देवदत्त भट्टिः

30.06.2011

Jnanpith Laureate
Mahamahopadhyaya Vidyavachaspati Vidyamartanda
Prof. Dr. Satya Vrat Shastri
Recipient of Padma Bhushan, Padma Shri & President of India Certificate of Honour
Honorary Professor, Special Centre for Sanskrit Studies
Jawaharlal Nehru University
Formerly Professor and Head, Department of Sanskrit
University of Delhi
Ex-Vice-Chancellor,
Shri Jagannath Sanskrit University, Puri (Orissa)

10.08.2011

प्रिया डॉ. गौतममहाभागाः

स्वस्त्यत्रभवद्भ्यः।

अरुणेत्यभिधानो भवत्प्रणीत उपन्यासो मयाऽऽमूलचूलम्, अक्षरशो, वाचितः। पूर्वमहमचिचिन्तं नानाकार्यग्रहग्राहग्रस्तोऽहं कालाभाववशात् कञ्चनांशमेवास्य वाचयितुं शक्ष्यामि, परं यदा वाचनं प्रारब्धं तदा परिसमाप्तिं यावद्वाचनं मे प्रावर्ततैव। एतत्कथानकस्यैतदीयस्य रुचिकरत्वं शैल्याश्चास्य रमणीयत्वं प्रमाणयति। मनोहरोऽत्र वाचां विन्यासः प्रतिपादना च मनोहरतरा। एतद् ग्रन्थरत्नप्रणयनार्थं सुतरामभिनन्दनार्हा भवन्तः। सर्वथा निर्दुष्टेयं कृतिर्विद्वत्कराङ्गुलि प्रणयितां यायादिति समासेनैव स्वं वच उपन्यस्य विरमाम्यहम्।

सुरसरस्वतीसमाराधनैकव्रतः
डॉ. सत्यव्रतः शास्त्री

डॉ. महेशगौतममहाभागाः
पट्वालयपुरालङ्कारभूताः

**महामहिमसम्पन्नेन भारत-राष्ट्रपतिना पुरस्कृतानां सम्मानितानाञ्च**
**शिरोमणिसाहित्यकारोपाधिना समलंकृतानां**
**प्रो. देवदत्तभट्टिमहोदयानां**
**डॉ. महेश गौतम-प्रणीतारुणाख्य-गद्यमहाकाव्यमधिकृत्य सम्मतिः**

महेश-गौतम-प्रख्यः सुधीर्महाकविः कृती।
जयत्यग्रासनासीनो विद्वद्वरशिरोमणिः।।१।।

महाकाव्यं महेशस्य नववस्तु-प्रदीपकम्।
रसज्ञानां मुदे भूयात् नवीनरसरञ्जितम्।।२।।

वस्तुविशेषपूर्णञ्च काव्यमिदं रसात्मकम्।
समेषां विदुषामस्तु मनोऽम्भोजविकस्वरम्।।३।।

नामूलं लिखितं किंचित्, न चोक्तमनपेक्षितम्।
सर्व-काव्यगुणोपेतं सकलं रसपूरितम्।।४।।

पिपासिताय वारीव सरुजे चौषधं यथा।
कामिने कामिनी चैव विद्भ्यः काव्यमिदं तथा।।५।।

एतस्य गद्यकाव्यस्य रचिता सम्मतिर्मया।
आद्योपान्तं पठित्वैतत् भूरि निर्वृत-चेतसा।।६।।

किञ्चिदिदं मयाऽलेखि 'अरुणा' काव्यहेतवे।
काव्यप्रणेतुरर्चायाम् अष्टकमिदमर्पितम्।।७।।

जानन् खलु गिरां मान्द्यं भावार्णवं विरम्य च।
सहजाल्पज्ञतां चैव गिरं स्वामुपसंहरे।।८।।

30.06.2011

प्रो. देवदत्त भट्टिः

## शिरोमणिसाहित्यकारसम्मानेन समलंकृतानां पटियालास्थपंजाबीविश्वविद्यालयस्य संस्कृतविभागस्य पूर्वप्राचार्याणामध्यक्षाणाञ्च डॉ. अभिमन्युमहोदयानामाशीर्वचांसि

अनवद्य-गद्य-रचना-चणेन, कविकुलाग्रगण्येन, श्रीभृता डॉ. महेशगौतम महाभागेन सन्दृब्धमरुणाधिवचनं गद्यकाव्यं मयाऽऽमूलचूलमालोचि, तेन चालम्भि वाचामगोचरः कश्चनानन्दातिरेकः। प्रकृते गद्यकाव्ये यो रस-निष्यन्दः स केवलं रसिकानुभवैकवेद्यः।

आचार्यमम्मटः काव्यप्रयोजनानि प्रतिपादयन्नाह -

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।

काव्यस्य प्रणयनं न केवलं यशसेऽर्थकृते वा, तत्तु कान्तेव सरसतापादनेन मधुरतया प्रेम्णा च लोककल्याणकृदुपदेशायापि भवति। यस्मिन् काव्ये लोक कल्याणकार्युपदेशो न वर्तते, न तत् काव्यमुत्तमकाव्यकोटिं भजते। लोक कल्याणोपदेशः काव्यस्यास्य प्रथमं प्रमुखञ्च प्रयोजनम्।

काव्यं समीक्षमाणेन प्रायो रसरीतिगुणालंकारा विचार्यन्ते। काव्यमिदमनया दृशाऽपि सुतरां सर्वगुणसमन्वितं विद्यते। रसस्तु सर्वातिशायी। असमासा, अल्पसमासा, कोमलवर्णा पदावली प्रसङ्गानुरूपं प्राप्यते। वैदर्भीरीतिमाधुर्य प्रसादगुणालंकाराः काव्यस्यास्योत्कृष्टतां मधुरतां च वर्धयन्तो दरीदृश्यन्ते।

प्रक्रमेऽत्राभिनवो गद्य-कविरभिनवं वस्त्वभिनवेन केनापि भङ्गिम्ना संयोजयन् सर्वथाऽभिनन्द्यः। काव्यमिदं पाठंपाठमहं नवे कस्मिन्नप्यपूर्वे काव्यलोके वर्त इत्यनुभवामि।

नवं काव्यकथ्यमाश्रित्य गुम्फितं काव्यमिदं नूनं साधु व्यञ्जयति मानव-समाजमिदानीन्तनं विविधाश्च समस्याः समाजेनानुभूयमानाः। नारीसशक्तीकरणम्,

भ्रूणहत्यानिरोधः, अपराधजगत उन्मूलनम्, समाजे सामाजिकन्यायसंस्थापनम् इति सन्ति काव्यस्यास्य बीजबिन्दवः।

प्रस्तुवन् किमपि नवं वस्तु डॉ. गौतममहाभागः संस्कृतगद्यकाव्यक्षेत्रे चिरं संस्मरिष्यते स्थायित्वं च प्राप्स्यति संस्कृतेतिहासग्रन्थेषु।

प्रकृते काव्ये कथ्यशिल्पयोरुभयोरपि नवता, प्रत्यग्रता, नवभावबोधस्य चाभिनवाऽभिव्यक्तिर्नितरां स्तुत्या। डॉ. गौतममहाभागेन संसाधितं यत्संस्कृत कविः सामयिकसाहित्यप्रणयने नान्येभ्योऽवर इति।

निश्चितमेवेदं काव्यं सहृदय-संस्कृत-पठकानां मनांस्यावर्जयिष्यति, कविरयं नूतनं च किञ्चित् निरन्तरं स्त्रक्ष्यतीति आशासे, इति।

विदुषां विधेयः

23.8.2011

डॉ. अभिमन्युः

## शिरोमणिसाहित्यकारसम्मानेन समलंकृतानां होशियारपुरस्थ वि.वि.भा.भा.अ.सं. पंजाब विश्वविद्यालये प्राचार्यपदमलंकृतवतां विदुषां शिरोभूषणानां महाकवीनां डॉ. जगदीशप्रसादसेमवालमहोदयानां सम्मतिः

विद्वद्वर डॉ. महेशगौतमविरचितम् अरुणेत्यभिधेयम् उपन्यासमधीत्य मोमुद्यतेतराञ्चेतः। साहित्यं समाजस्य दर्पणो भवतीति उक्तिरत्र चरितार्था भवन्ती दृश्यते। उपन्यासस्य कथायाः सङ्क्षेपोऽनेन प्रकारेण अस्ति –

अरुणेति नाम्नी काचिद् युवती पटियालानगरे राजनीतिशास्त्रे स्नातकोत्तरोपाधिमवाप्य तत्रैव पी-एच.डी. इत्युपाधयेऽनुसन्धानकार्ये प्रवृत्तास्ति। कथानायकः प्रमोदोऽपि राजनीतिशास्त्र एवानुसन्धानकार्ये व्यापृतोऽस्ति। तारुण्यवशादुभयोः परिचयोऽनुरागे परिवर्तते। त्वयैव विवाहं करिष्यामीति अरुणां प्रतिश्रुत्य प्रमोदः तया सह शारीरिकसम्बन्धं स्थापयति। परिणामतः सा गर्भवती भवति। विवशा अरुणा स्वपितृष्वसारं सर्वं तथ्यं निवेदयति। अरुणायाः पितृष्वसा अनुराधा स्वभ्रातरं भ्रातृजायाञ्च सर्वं वृत्तान्तं सूचयति। ततः चिन्तितः पिता अरुणाया विवाहस्य प्रस्तावं कर्तुं प्रमोदस्य गृहं गच्छति, प्रमोदेन सह तस्या विवाहार्थञ्च प्रार्थयते। किन्तु प्रमोदस्य पितरौ तस्य विवाहं जूहीति नामिकया अमेरिकानिवासिन्या तरुण्या सह चिकीर्षतः। प्रमोदोऽपि जूहीम् अरुणापेक्षया धनाढ्यां मत्वा तामेव पत्नीं विधातुम् इच्छति। ''प्रमोदकृतेन शारीरिक-सम्बन्धेन अरुणा अन्तर्वत्नी सञ्जातेति'' कथनमपि प्रमोदेन निरस्तम्। प्रमोदो जूह्याः पितृभ्यां विवाहार्थम् आहूतोऽमेरिकां याति।

अत्र अरुणायाः पितरौ पितृष्वसा च तां गर्भपातार्थं प्रेरयन्ति। किन्त्वरुणा स्वं गर्भं निपातयितुं नेच्छति। सा ततः शिमलानगरं गत्वा पुत्रं प्रसूते। लोकापवादभीत्या शिमलात एव स्वपुत्रमादाय मुम्बापुरीं गच्छति। तत्र स्ववैदुष्यप्रभावेण

प्रवचनचातुर्येण च कौण्डकर इत्यभिधेयस्य विधानसभासदस्यस्य सम्पर्के आगता वाग्विशारदा अरुणा तस्य प्रभावेण एकस्मिन् महाविद्यालये राजनीतिशास्त्रे प्राध्यापिका भवति, कौण्डकरस्य साचिव्यञ्च विदधाति।

अरुणा राजनीतिशास्त्रे नैपुण्यवशात् समये-समये कौण्डकरं तत्तत् कर्तुं कथयति येन तस्य अभ्युदयो भवेत्। उपागते पुनर्निवाचनकाले महत्त्वाकाङ्क्षी कौण्डकरोऽरुणायाः कथनानुरूपं सर्वं करोति। सञ्जाते निर्वाचने कौण्डकरदलस्य अधिकतराः सदस्या विजेतारो घोषिता भवन्ति। कौण्डकरो मुख्यमन्त्री भवति, अरुणाञ्च गृहमन्त्री करोति। एष समाचारः समाचारपत्रेषु दूरदर्शने च बाहुल्येन प्रकाश्यते।

तत्र प्रमोदस्तु अमेरिकां गत्वा जूह्याः स्वेच्छाचारं दृष्ट्वा दुःखेन सन्तप्तः तस्या भर्त्सनाञ्च प्राप्य भारतं प्रत्यागत्य अरुणामेव विचिन्तयन् दिनानि गमयति।

समाचारपत्रेषु दूरदर्शने च गृहीताज्ञातवासाया अरुणायाः चित्रं वार्तां चावगम्य अरुणायाः पितरौ पितृष्वसा च तस्याः पार्श्वं गच्छन्ति। प्रमोदोऽपि तस्याः सदाचारं स्मारं स्मारं तां द्रष्टुं मुम्बापुरीं गच्छति। तत्र च सर्वेषां पुनर्मेलनेन सहैव उपन्यासः समाप्तिमाप्नोति।

अस्मिन्नुपन्यासे अरुणा नायिकारूपेण चित्रितास्ति। सम्पूर्णा कथा तामेवावलम्ब्य पल्लविता भवति। सा एका भारतीया युवतिः। सकृदतिक्रान्तमर्यादा अपि न पुनर्विषमासु अवस्थास्वपि मर्यादां परिजहाति। सकृन्मर्यादातिक्रमणेऽपि तस्या यौवनं सहशिक्षा च कारणमित्यत्र ध्वन्यते।

अत्र अमेरिका-वासिनी जूही प्रतिनायिकारूपेण चित्रितास्ति। सा अरुणापेक्षयाऽधिकसमृद्धाऽस्ति, किन्तु तत्रत्यसंस्कारानुरूपं तस्याः स्वेच्छाचारः भारतीयं युवानं प्रमोदम् एतावद् दुनोति यत् स तया विवाहम् अकृत्वैव भारतं प्रत्यावर्तते।

प्रमोदोऽस्योपन्यासस्य नायकरूपेण चित्रितः। स पूर्वमरुणां भार्यां विधातुं प्रतिजानीते, किन्तु पश्चात् गृध्नुस्वभावेनाभिभूतो धनाढ्यां जूहीं परिणेतुमिच्छति। तदर्थम् अमेरिकां गत्वा तत्र जूह्याः स्वेच्छाचारं दर्शं दर्शं भृशं पीडितो विवाहम् अकृत्वैव पुनः भारतं प्रत्यावर्तते। अरुणां च विचिन्तयन् दिनानि गमयति। एकस्मिन् दिने दूरदर्शनमाध्यमेन अरुणां विलोक्य तद्विषयां वार्तां च श्रुत्वा मुम्बापुरीं गच्छति। तत्र गृहमन्त्रीति पदारूढाम् अरुणां दृष्ट्वा भृशं लज्जितः,

ममापराधमक्षम्यमपि क्षमस्वेति निवेद्य क्षान्तस्तया तां विधिवत्परिणयति।

उपन्यासे कानिचिदन्यानि पुरुषपात्राणि तथा स्त्रीपात्राण्यपि सन्ति, येषां व्यापारेणोपन्यासस्य कथा अग्रे सरति।

उपन्यासस्य भाषाशैली प्राञ्जला प्रवाहमयी चास्ति। अत्र दक्षिणापथस्य ऐतिहासिकानां दर्शनीयानां च स्थानानां वर्णनं लेखकस्य विशेषज्ञतां प्रमाणीकरोति।

मया एतादृश उपन्यासः पूर्वं कदापि न दृष्टः। अद्यत्वे संस्कृतभाषायाम् एतादृशस्य साहित्यस्य आवश्यकता अस्ति। अहं विपश्चित्प्रवरं डॉ. महेशगौतम महाभागं साधुवादान् वच्मि।

अरुणाख्य उपन्यासो नव्यो भव्यः सुधीप्रियः।
कृतः सुकृतिना येन स यशस्वी भवेच्चिरम्।।

विदुषामाश्रवः,

23.8.2011 डॉ. जगदीशप्रसादः सेमवालः

## निवेदनम्

समभ्यर्चनीया विद्वांसः,

उपन्यासोऽयमरुणाख्योऽत्र भवतां परिचर्यायां विनतचेतसा मया प्रस्तूयते। सुरभारतीं सामान्यजनवाणीमपि यदि वयं चिकीर्षामस्तर्हि संस्कृतभाषाया व्यावहारिकः प्रयोगः प्रोत्साहयितव्य, एवं विचार्य, संस्कृतभाषायां रचितानां पुस्तकानामध्ययने संस्कृतज्ञानां रुचिं संवर्धयितुमद्यतनविषयमधिकृत्य किञ्चित् लिलिखिषुरहम् अस्योपन्यासस्य रचनायां प्रवृत्तः।

धन्यवादार्हाः सन्ति शिरोमणिसाहित्यकारसम्मानेन विभूषिता डॉ. मनमोहन सहगलमहाभागा येषां हिन्दीभाषायां रचित उपन्यासः 'समझौते से पहले' मदीयस्यास्योपन्यासस्य रचनायां प्रवृत्तेर्निमित्तमभवत्। उपक्रमेऽस्यैव कथासूत्रम् आधृत्य प्रस्तुतस्य उपन्यासस्य रचनायां प्रवृत्तस्य मम कल्पनाया अकस्मात् कदा स्खलितमेतत्सूत्रमेतत्तु नाहं स्वयमप्यवगन्तुमपारयम्।

महामहिमसम्पन्नेन राष्ट्रपतिना सम्मानिताः समलंकृताश्च नभोगतदिवाकर इव देदीप्यमानाः प्रखरतेजस्विनो विद्वांसः महाकवयः डॉ. शिवप्रसादभारद्वाज महोदया इमम् उपन्यासं पठित्वा आशीर्वचोभिर्मामकृतार्थयन्। एतान्प्रति श्रद्धावनतोऽहं कृतज्ञतां प्रदर्शयामि।

ज्ञानपीठ-पद्मभूषण-पद्मश्रीप्रभृतिभिर्विरुदैर्भारतमातुर्ललाटालङ्कारभूता, महामहिमशालिना राष्ट्रपतिना सम्मानिताः, शिरोमणि-साहित्यकारसम्मानेन समलंकृताः प्रखरविद्वांसो महाकवयः श्रीमन्तो डॉ. सत्यव्रतशास्त्रिमहोदया आशीर्वचनैर्मां कृतिनमकुर्वन्। उपकृतज्ञोऽस्मि पूजार्हाणां तत्र भवताम्।

संस्कृतभाषायाः साहित्यस्य च मर्मज्ञाः प्रकाण्डविद्वांसः महाकवयः वर्तमान युगस्य कालिदासाः शिरोमणिसाहित्यकारसम्मानेनालंकृताः श्रीमन्तो डॉ. जगदीशप्रसादसेमवालमहोदयाः सम्पूर्णमिममुपन्यासं प्रतिशब्दं पठित्वा स्वाभिमत

रूपेणास्योपन्यासस्य प्रस्तावनामलिखन्। अनुगृहीतोऽस्म्येषामुपकारेण।

आधुनिकसंस्कृतकाव्यविधायाः प्रवर्तकाः शिरोमणिसाहित्यकाररूपेण सम्मानिता भारतराष्ट्रपतिना पुरस्कृताः सभाजिताश्च प्रो. देवदत्तभट्टिमहोदयाः सदैव संस्कृतभाषायां साहित्यसर्जनार्थं मां प्रेरयन्ति। शिरोमणिसाहित्यकाररूपेण समलंकृता डॉ. अभिमन्युमहोदयास्तु मम पथप्रदर्शकाः सन्ति। श्री हरिदत्तशास्त्रि महोदया अपि संस्कृतभाषायां रचनाकार्ये प्रवृत्त्यर्थं मां प्रोत्साहयन्ति। एषामुपकारैः बद्धोऽयं विदुषामनुचरः।

हरियाणा संस्कृत अकादमीति संस्थाया उपाध्यक्षमहोदया डॉ. रामेश्वरदत्त शर्माणः संस्कृत कविसम्मेलनेषु मामाहूय सदैव संस्कृतभाषायां लेखनार्थं प्रोत्साहयन्ति। एषु कविसम्मेलनेषु गत्वाहमनुभवामि यदद्यापि संस्कृतभाषायां लेखनं समानतः सार्थकं वर्तते।

साम्प्रतं हरियाणा संस्कृत अकादमीति संस्थाया निदेशकमहोदयैः सुधीरकुमार महाभागैः इममुपन्यासं प्रकाश्य दृढमुपकारबद्धोऽयं देववाण्या विनम्र उपासकः। अतः साधुवादार्हा धन्यवादार्हाश्च सन्ति ते।

संस्कृतभाषाया व्याकरणस्य च विशेषतो विद्वांसः गोलोकवासिनः प्रातः स्मरणीया ममपितृचरणाः श्री पं. बलदेवकृष्णशर्माणः, वात्सल्यमूर्तिर्मम जनयित्री श्रद्धेया स्वर्गीया श्रीमती कृष्णादेवी च अद्यापि मम पार्श्वे स्थिताविव सदैव मां प्रेरयतः। त्रैलोक्यविस्तीर्णान् तान् प्रति मम श्रद्धासुमनाञ्जलयः।

अन्तिमं नचाल्पिष्ठम् – मम जीवनसङ्गिनी श्रीमतीकुसुमलता निरन्तरं मम प्रेरणास्त्रोतोऽस्ति। प्रतिदिनं मया लिखितं कम्प्यूटरे सुरक्षितं कुर्वती तनयानिर्विशेषा मम स्नेहपात्रं शीलावर्मा मदीयाशीर्वादानां पात्रमस्ति। मुखपृष्ठस्य सुचारुसज्जाकर्म सौभाग्यवद्भ्याम् अवधेशरुचिदम्पतीभ्यां महता मनोयोगेन कृतम्, इत्यर्थं स्वस्ति सहिताभ्यां ताभ्यां ममाशिषः।

आधुनिकं विषयमधिकृत्य सरलसंस्कृतभाषायामस्योपन्यासस्य रचनाया विनम्रो मम प्रयासः कियान् सफल, एतत्तु विद्वांसः पाठका एव निर्णेष्यन्ति।

विदुषां विधेयः

27.12.2011

महेशगौतमः

# अरुणा

## ( उपन्यासः )

### अथ प्रथम उच्छ्वासः

सश्रीकरम्यनवयौवनसम्पद्भारानतापि अरुणा राजनीतिशास्त्रविषये स्नातकोत्तरोपाधिं प्रथमश्रेण्यां स्वर्णपदकविशिष्टं प्राप्य उच्चशिक्षाजन्य गौरवेणोन्नतशिरा आसीत्। विश्वविद्यालयाधिकारिभिः शोधच्छात्रवृत्त्यर्थं प्रस्तावितायास्तस्या हर्षस्तु सीमातीतोऽवर्तत। बाल्ये निम्नमध्यमवर्गपरिवारे सामान्यरूपेण पालिता पोषिता च सा अधुना स्वयौवनलावण्यप्रतिभाभिः सर्वेषाम् एव ईर्ष्याकारणम् अभूत्। कुशाग्रबुद्धिमती आसक्तचित्ता समाहिता च सा अप्रमादं शोधकार्यमारभत। शोधनिर्देशकः अन्ये च विश्वविद्यालयस्य आचार्या अरुणाया नवीनसङ्कल्पैः तीक्ष्णया च समीक्षणदृष्ट्या सुतरां प्रभाविता आसन्।

राजनीतिशास्त्रविभागे एव एकोऽन्य ओजस्वी प्रबुद्धः अतिप्रभविष्णु व्यक्तित्वसम्पन्नश्च युवा अरुणया सहैव शोधकार्यलग्न आसीत्। उच्चमध्यवर्गीयः संज्ञया प्रमोदः स सफलस्य सश्रीकस्य च व्यवहारिणः पितुः सन्ततिरभूत्। नगरस्य समृद्धे क्षेत्रे प्रासादाकारं रोचिष्णु बभूव गृहं तस्य परिवारस्य। स च महार्घेण कारयानेन सविलासं विश्वविद्यालयमायाति स्म। भौतिकसमृद्ध्या सहैव प्रमोदस्य वाग्वैदग्ध्यमपि सम्मोहकमभवत्।

अलूनं किसलयमिव कमनीयमासीदरुणायाः सौन्दर्यम्, अद्भुतमाकर्षकञ्च प्रमोदस्य पौरुषमासीत्। शिष्टरीत्यनुसारिणी सुरेखा अरुणा नासीन्मर्यादानभिज्ञा परं वात्यानुगम्यमानं तृणमिव तस्या मनः प्रमोदमेवानुधावति स्म। उपक्रमे अनालापी वाचंयमः तस्या अनुरागः शनैः शनैः वाग्विशिष्टतां गतः पल्लवितः। एवम् असाधारणप्रतिभावतोः समानवयसोः परस्परमाकृष्टयोः तयोर्मिथः प्रेमप्ररोहो निःशब्दमेवाङ्कुरितो विप्रथितश्च।

निम्नमध्यवर्गस्य युवतीनां कोमलप्रेमभावनासु यादृशी गम्भीरता निष्ठाभावः समर्पणभावश्च प्रकृत्यैव प्राप्यन्ते न ते उच्चमध्यवर्गीयाणां युवकानां स्वभावे प्रायः लक्ष्यन्ते। तेषां कृते तु एवंविधाः कोमलभावना विलासमात्रं भवन्ति। एतादृशः तयोः प्रणयः अनुदिनम् उत्तरोत्तरम् अवर्धत।

अरुणायाः पितुः स्वसा अनुराधा स्वभ्रातुः परिवारे एव अवसत्। अरुणाया जन्मसमये अनुराधा दशमकक्षायाः छात्रा आसीत्। तस्या जन्मनि अनुराधाया आनन्दोद्रेको द्रष्टव्यो बभूव। तस्या मातुः परिचर्यापि अनुराधाया एव चिन्ताभारो जातः। जातकस्य मातुश्च सम्पूर्णा अभियोज्यता तयैव गृहीता आसीत्।

अरुणोदये जातकस्य जन्म इति हेतोर् अरुणा इति तस्या नाम अनुराधयैव कृतमासीत्। स्नातककक्षापर्यन्तं शिक्षाग्रहणानन्तरम् अनुराधाया विवाह एकेन पुलिस-अधिकारिणा युवकेन सह सम्पन्नः। दक्षिणः शुचिः न्यायाचारश्चासौ न केवलं प्रेमवर्षकः पतिः, कर्तव्यक्षेत्रेऽपि स्वनैर्मल्येन महायशा बभूव एष युवा अधिकारी। अपराधिनां कृते तु अत्यधिकमरुचिकरी आसीदेतादृशो न्यायमार्गिणोऽधिकारिणः तेषां क्षेत्रे उपस्थितिः। सत्यमार्गानुसारिणोऽधिकारिणः स्थितिस्तेषां मृत्योः पर्याय आसीत्। सर्वविधप्रयासानन्तरमप्यसफलैः अपराधिजगतः तस्करगणाधिपतिभिः तेषां मार्गावरोधकस्य तस्य व्यापादनं निर्णीतम्। एकदा रात्रौ मोटरसाइकलयानेन गृहमागच्छन्नसौ निभृतस्थाने तैः प्रस्थापितेन अज्ञातेन केनचित् गोलिकया विद्धः तत्कालमेव निष्प्राणोऽभवत्। पुलिसविभागस्तु न कदापि हन्तारं ग्रहीतुम् अपारयत्। अकस्मात् वैधव्यमांसा अनुराधा तदा प्रभृति अरुणायाः पितुर्गृहे एव अवसत्।

सैव चासीदरुणायाः सहजसंरक्षिका। अरुणा विश्वविद्यालयस्य सर्वं वृत्तान्तं, सहचराणां यूनां व्यवहारं, तस्याः स्वकीयस्य मनसः सङ्कल्पमभीष्टं च सर्वं तया सह व्यमृशत्। अरुणाया यौवने कन्दर्पकोकिलस्य कूजितमपि अनुराधाया अज्ञातं नातिष्ठत्। तथापि प्रमोदेन सह प्रणयप्रसङ्गस्य विस्तृतं विवरणं तु संवृतमेवातिष्ठत्। अनुराधया पुनः पुनः पृष्टापि अरुणा पराचीना वाक्छलेन प्रणयिना सह सम्बन्धस्य परिणाहं तु गूढमेवारक्षत्।

एकस्मिन् दिने अरुणाया आत्मविस्मृतिरूपया अवस्थया शङ्किता अनुराधा तां तस्या जीवने प्रविष्टस्य यूनो विषयेऽपृच्छत्। तदा अरुणा पितृष्वसुः तस्याः

सम्मुखं प्रमोदविषये सर्वं रहस्यम् उदघाटयत्। चिन्तिता अनुराधा प्रमोदस्य समृद्धतामभिलक्ष्य अरुणामतन्द्रां कर्तुं प्रायतत; वित्तगौरवादिदृष्ट्या प्रमोदस्य अपेक्षा-सम्भावनादिविषये तां प्राबोधयत्; परम् अप्रतिहतगतिर्भवति कामेच्छाप्रवाहः। प्रेमान्धाया अनिरुद्धाया अनायासमाकृष्यमाणायाश्च अरुणायाः प्रमोदं प्रति प्रणय उत्तरोत्तरम् अवर्धत एव।

राजनीतिशास्त्रे स्नातकोत्तरपर्यन्तम् उच्चशिक्षिता अत्यधिकं प्रबुद्धतया च शोधकार्ये लग्ना अरुणा आत्मानं परिपक्वबुद्धिं विचक्षणाञ्चामन्यत। सा सभ्यरीत्यनुसारिणः प्रमोदस्य व्यवहारं न कदापि शङ्कास्पदमन्वभवत्। अनेकदा प्रमोदः अरुणाया गृहमप्यागच्छत्। सर्वे एव तस्य आचरणेन परितुष्टा आसन्। तथापि नासीदेतदनवगतम् अरुणाया यद् विश्वासकथाप्रसङ्गेषु तस्या विश्वासपात्रं पितृष्वसा अनुराधा प्रमोदेन सह तस्याः सम्बन्धेषु मर्यादातिक्रमणस्य पक्षधरा नासीत्। परं सर्वेभ्योऽपि विनिगूह्य प्रमोदेन सह तस्याः प्रणयश्चन्द्रकला इवानवरतं व्यतनोत्।

यथासम्भवं शोधकार्येऽपि दत्तचित्ताया अरुणायाः शोधप्रबन्धः सम्पूर्णतां गतः। प्रखरबुद्धिसामर्थ्यसम्पन्नयोरुभयोरपि शोधप्रबन्धौ यथासमयं परीक्षणार्थं प्रस्तुतौ।

एकदा अरुणायाः पितरौ पितृष्वसा च कस्यचित् सम्बन्धिनो विवाहसमारोहे सम्मिलितुमम्बालानगरं गता आसन्। एकस्यां मासिकपत्रिकायां प्रकाशनार्थं शोधपत्रलेखने व्यस्ततयारुणा पटियालानगरे स्वगृहे एकाकिन्येव अस्थात्। अकस्माद् द्वारघण्टिकायाः शब्दं श्रुत्वा उद्घाटिते द्वारेऽरुणा प्रमोदं समक्षमुपस्थितं दृष्ट्वा तस्मै स्वागतवचनं व्याहरन्ती अन्तर्गृहमानीय आसन्दिकाया मुपवेष्टुं प्रार्थयत। सर्वेषां परिवारसदस्यानामनुपस्थितिम् आत्मनश्चैकाकित्वम् अनुभूय किंकर्तव्यविमूढा, अस्तव्यस्ता, व्यग्रा च सा तं तत्कालं गन्तुं, कस्मिंश्चिदन्यस्मिन् च दिवसे पुनरागन्तुं प्रार्थयन्ती क्षमामयाचत।

अरुणामेकाकिनीं ज्ञात्वाधिकमेवोत्साहितः प्रमोदोऽकथयत् - नाहमज्ञात कुलशीलो बहिरङ्ग, आवां न केवलं घनिष्ठे मित्रे, अपितु विवाहानन्तरं सहैव जीवनयापनमावयोः स्वप्नः। नास्ति किमपि कारणं भयस्य। परस्परं प्रेमालापस्य दुर्लभोऽयमवसरः। एवमुक्त्वा प्रमोदः सङ्कोचशीलामप्यरुणा मालिङ्गनबद्धाम्

अकरोत्, अवदच्च – अद्यैव गान्धर्वविवाहेन त्वां पत्नीरूपेण वृणोमि।

इदानीम्पर्यन्तं येनकेनाप्युपायेन प्रगृहीतः कामाग्निः अकस्मादवसरं प्राप्य प्रवृद्धः। सर्वमेतदमर्यादितमनुपयुक्तं चैतत् जानन्त्यपि अरुणा बुद्धिपुरःसरं यथाकल्पं प्रमोदस्य समक्षम् आत्मानं न्यवेदयत्। भावाभिभूते तस्मिन् क्षणे प्रमोदस्य तप्तौ ओष्ठाधरौ अरुणाया ओष्ठाधराभ्यां सम्पृक्तौ। आनन्दप्रवाहे निमग्नौ अर्धचेतनाविव कदा च तौ द्वावपि एकत्वमाप्तौ, नैकोऽपि तयोर्ज्ञातुमपारयत्।

पुनश्चात्मनः स्थितिं निध्याय पश्चात्तापमिव कुर्वती अरुणा प्रमोदमवदत् – अतिक्रान्ता आवाभ्यां मर्यादा। गान्धर्वविवाहानन्तरमपि कुटुम्बिनां मध्ये विवाहात् पूर्वं एवंविधममर्यादितमाचरणम् अनुपयुक्तम्। तृप्तिसुखमनुभूय आनन्दसागरे मग्नः प्रमोदस्तु तां पुनरेकवारं गाढमालिङ्ग्य शीघ्रं परिणयसम्बन्धेन जननान्तरसौहृदं संसारस्य समक्षं स्वीकर्तुम् प्रतिश्रुत्य गतः।

एवं प्रतिजानतोऽपि प्रमोदस्य मनस्तु अन्यत्रैव चिन्तासन्तानवितानैकतान आसीत्। भट्टीपरिवारस्य एकाकिनी पुत्री जूही तस्य पित्रोः चयनमासीत्। अमेरिकायां बृहदाकारस्य प्रस्थापितस्य तस्याः पितुः उद्योगस्य सा एव उत्तराधिकारिणी वर्तते। सुन्दरी चाप्यस्ति सा। यदि तया सह परिणयः निश्चीयते, जीवनं तु स्वर्गसमं भविष्यति। एवं सति अरुणया सह घटितोऽयं प्रेमप्रसङ्गः अतिरिक्तम् आनन्दप्रदस्तु अस्त्येव।

अरुणाया जीवने अद्भुता अतुलनीया अविस्मरणीयाश्चासन् एते क्षणाः। सा तु तान् स्मारं स्मारं आत्मविस्मृता इव, भिन्ने इव कस्मिंश्चित् संसारे अन्तरिता, भविष्यजीवनस्वप्नसङ्कल्पेषु मग्ना प्रमोदमेव सर्वस्वं मन्यमाना आत्मानम् अभ्यनन्दयत्।

अरुणा मनसि अचिन्तयत् – प्रमोदस्तु तस्या जीवनमेवास्ति। विवाहानन्तरं एकं सुन्दरं गृहं तयोर्भविष्यति; तयोः शिशवः प्राङ्गणे क्रीडन्तः तयोर्जीवनं स्वर्गतुल्यं विधास्यन्ति।

एकदा विश्वविद्यालयस्य अतिरमणीये उद्यानेऽभिसारकाले स्वमनोभावं प्रकटयन्ती अरुणा प्रमोदं परामृशत् – अधुनैतत्प्रासङ्गिकं यत् पित्रोः समक्षम् आवयोः प्रणयसम्बद्धं सर्वं वृत्तान्तम् अनावृत्य शीघ्रमेव विवाहविषये निर्णयः कर्तव्यः। आवयोः प्रणयपरिणामरूपः परिणयस्तु अधुना अनिवार्यतां गतः।

प्रमोदस्य प्रतिक्रिया तु अनपेक्षिता आसीत्। कलुषितहृदयः स तु उक्तसन्दर्भे किमपि वचनमदत्त्वैव गतः।

एवं समतिक्रामत्सु दिवसेषु इच्छन्त्यपि अरुणा पुनः प्रमोदं द्रष्टुं नाशक्नोत्। स्वपितुः व्यापारे प्रमोदस्य रुचिरकस्मादवर्धत। दूरभाषेण सम्पर्कं साधयितुं कृताः प्रयासा निष्फलतां गताः। पी-एच.डी. पर्यन्तं उच्चशिक्षितो यः प्रमोदः कस्मिंश्चिद् विश्वविद्यालये आचार्यो भवितुमकल्पयत् अधुना तस्यैवाकस्मात् पितुः व्यापारकार्येऽतिरिक्ता रुचिररुणायाः चिन्ताकारणमासीत्।

प्रमोदस्तु पित्रोः परामर्शं मन्यमानो जूह्या सहैव विवाहं लाभप्रदममन्यत। जूह्या सह विवाहानन्तरम् अमेरिकादेशे स्थायिरूपेण निवासे सति अरुणासदृश्यो नैका युवत्यः तस्य संसर्गे आगमिष्यन्ति। अतः अरुणया सह तस्य सुरतसम्बन्धं तु स अत्यन्तं सामान्यतयैव अगृह्णात्। जूहीमपि स तस्याः पितुरमेरिकायां स्थापितस्य बृहदाकारस्य व्यापारस्य स्वामित्वप्राप्तौ साधनमेवामन्यत।

प्रमोदं चिरं प्रतीक्ष्य एकस्मिन् दिने अरुणा स्वयमेव प्रमोदस्य गृहमगच्छत्। प्रमोदस्य मात्रा पित्रा च सह तस्याः पूर्वमेव परिचय आसीत्। उभावपि सस्नेहं ताम् अभ्यनन्दयताम्। प्रमोदस्तु गृहे नासीत्। किञ्चित्कालं प्रतीक्षानन्तरं गृहमागतः प्रमोदः अरुणां दृष्ट्वा स्तब्ध इवाभवत्। तस्य व्यवहारे परिवर्तनं दृष्ट्वा चिन्तिता अरुणा स्पष्टरूपेण शीघ्रातिशीघ्रं तयोर्विवाहस्यावश्यकतां प्रति तं प्राबोधयत्। यथार्थवैकल्येन विषयात् पलायमानं तं यदा अरुणा स्पष्ट सम्भाषणाय प्रार्थयत तदा सलज्जमुदतरत् यत् स विवाहविषये मात्रा सह वार्तालापायोचितमवसरमद्य यावत् न लब्धवान्। अधुना उचितमवसरं दृष्ट्वा यथाशीघ्रं स मात्रा सह अस्मिन् विषये वार्तालापं करिष्यति। अस्मिन् विषये पित्रा सह वार्तालापायापेक्षितं साहसं तु तस्य नास्त्येव।

चिन्तामग्ना अरुणा प्रमोदस्य समक्षं स्वकीयामाशङ्कां प्राकाशयत् - कतिचिद्दिनादारभ्य मम स्वभावे वैरस्यं विवमिषा च मे मनो व्यथयतः। अत एव भीताहं विवाहे शीघ्रतायै अतिनिर्बन्धेन त्वां प्रार्थये। किञ्चिद्विचलितोऽपि प्रमोद आलिङ्गनाधरचुम्बनादिना यथाकथञ्चित् तां सान्त्वयित्वा स्वगृहात् प्रैषयत्।

प्रमोदस्य व्यवहारेऽकस्मादागतमेतादृशं शैथिल्यमनुभूय चिन्तामग्ना अरुणा स्वगृहमागच्छत्। परमधुना तस्या मनसि विद्रोहभावनाया उद्रेकः तीव्रोऽभवत्।

तस्या विवमिषामुत्क्लेशं च दृष्ट्वा चिन्तितया अनुराधया सस्नेहं पृष्टा सा अत्यन्तमुद्विग्ना भूत्वा पितृष्वसुः क्रोडे मुखं निधाय सगद्गदमरोदीत्। किञ्चित्कालं यावत् अनुराधाया शाटिकाञ्चलमार्द्रयित्वा विषण्णा अरुणा तामवदत् – अहो! वञ्चितास्म्यहं लम्पटेन तेन प्रमोदेन; नाहमशकमात्मानं निग्रहीतुम्; भवत्याः परामर्शस्यावहेलनाया एवैतत्फलम्; किमहं करवाणि; श्लक्ष्णक्षणेषु भावप्रवाहिता अहमेतादृशीं स्थितिं प्राप्ता इति।

अधिगम्य सर्वं रहस्यं चिन्तिता अनुराधा सानुरागं सवात्सल्यं च अरुणां समवाबोधयत् – युवतीनां यूनां च मध्ये पारस्परिकमाकर्षणं तु स्वाभाविकं भवति। अद्यतनकाले यूनां कृते युवतिभिः सह प्रणयप्रसङ्गाः प्रायः विलासमात्रं भवन्ति, परं युवतीनां स्थितिस्तु भिन्ना भवति। एतादृशां प्रणयप्रसङ्गानां परिणामः तासां तु सम्पूर्णमेव जीवनं प्रभावयति। अप्रतिहतगतिर्दुदमनीयः कन्दर्पज्वरः ताः कण्टकाकीर्णेऽस्मिन् मार्गे प्रेरयति। क्षणिकं सुरतसुखं तासां गर्भे स्थायिनं स्मृतिचिह्नं प्रतिष्ठापयति। सर्वं जानन्त्योऽपि युवतय आत्मानं रक्षितुं न पारयन्ति। मधुपा भ्रमरा इव युवानः ता भुक्त्वा परित्यज्य गच्छन्ति अपुनरागमनाय। दुष्यन्त ऋषेः कण्वस्याश्रमे शकुन्तलाया यौवनरसं भुक्त्वापि, ''एकैकमत्र दिवसेदिवसे मदीयं नामाक्षरं गणय गच्छसि यावदन्तं तावत्प्रिये मदवरोधनिदेशवर्ती नेताजनस्तव समीपमुपैष्यति'' इति वचनं दत्त्वापि तां व्यस्मरत्। राजप्रासादे समुपस्थितामपि च तां नाभिजानन् प्रत्यादिशत्। यदि पराक्रमिणो दुष्यन्तस्य एतादृश आचारः कथम्पुनः प्रमोदसदृशाः सामान्या युवानो विश्वासपात्रं सम्भवन्ति। इदानीं तावत् सर्वाधिकमावश्यकोऽस्ति प्रमोदेन सह तव विवाहः। एतदर्थं तेन, तस्य पितृभ्यां च सह विमर्शोऽविलम्बं विधेयः।

अनुराधा एकान्ते भ्रातरं भ्रातृजायां च सर्वं वृत्तान्तमकथयत्। आघातेन जड़ीकृताविव, प्रहारमूर्च्छिताविव, बधिरीकृताविव तीक्ष्णव्यथोपहतौ तौ न किमपि कथयितुमपारयताम्। परेद्युः अरुणायाः पिता विवाहप्रस्तावाय प्रमोदस्य गृहमगच्छत्। प्रमोदस्य पिता तु अत्यन्तं सभ्यतया उभयोरपि परिवारयोर्मध्ये सामाजिकप्रतिष्ठाया आर्थिकस्य च स्तरस्य भेदमवबोध्य प्रस्तावस्य अनुपयुक्ततामसम्भाव्यतां च स्पष्टमकरोत्। अरुणया सह प्रमोदस्य प्रणय सम्बन्धस्य तज्जनिताया धृतगर्भतायाश्च प्रश्ने समुपस्थिते स प्रमोदमाकारयत्।

समक्षमागतः प्रमोदस्तु सर्वं प्रत्यादिशन् अवोचत् – आवयोः शोधकार्यं सहैव सम्पन्नतां गतम्। प्रशस्ता, शिष्टा अदुष्टा चास्ति आवयोर्मैत्री। आवयोर्मध्ये प्रणयसम्बन्धस्य तु प्रश्न एव नास्ति। शुभाचारा अरुणा कथं केन च सगर्भाभवत् नाहं किमपि जानामि। अहं तु श्व एव अमेरिकागमनाय उपयुक्तद्रव्यसम्भारम् एकत्रीकर्तुं समुद्यतोऽस्मि। प्रमोदः अत्यन्तं निष्ठुरतया इत्येतावदुक्त्वा उत्थाय गतः।

पित्रोः दुःखं तु वर्णनातीतमासीत्। अरुणाया माता तु दुःखातिरेकेण मूर्च्छिता जलविन्दूनामवसेचनेन यथाकथञ्चित् स्वस्थाभूत्। प्रमोदस्य प्रतिज्ञातिक्रमेण, अस्थैर्येण वितथतया च अत्यन्तमुद्विग्ना अरुणा 'शुभाचारा अरुणा कथं केन च सगर्भाभवत् नाहं किमपि जानामि' इत्येवम्प्रकारेण अप्रत्ययस्य तस्य मिथ्याभियोगेन तु मृतप्राया एवाभवत्। येन सह जीवनयापनाय रुचिराः स्वप्नाः कल्पिता, अविश्रम्भस्य तस्य एवम्प्रतिज्ञाभङ्गः सरलामरुणामत्यधिकं निराशम् अकार्षीत्।

अधुना अरुणाया माता, पिता, अनुराधा च लोकमर्यादारक्षायै गर्भस्रावमेव एकमात्रमुपायमपश्यन्। एतदर्थम् अरुणायाः सहमतिं प्राप्तुं परिवारस्य सर्वे सदस्या यथासम्भवम् प्रायतन्त, परम् अरुणा तु अप्राकृतिकरूपेण गर्भनिवारणाय प्रस्तुता नासीत्। गर्भस्रावप्रक्रियायां सम्भाविता पीडा तु तस्य कारणमासीदेव, सहैव गर्भस्थस्य स्वकीयस्य अंशस्य शिशोरेवंविधस्य गर्हितस्य परित्यागस्य परिकल्पनापि तस्या वेदनायाः कारणमासीत्। यदा अनुराधा पितरौ च, सर्वेऽपि ताम् अवबोधयितुं नाशक्नुवन्, उदरवृद्धिश्चारब्धा, तदा षष्ठे मासे पिता तां प्रसवाय शिमलानगरे स्थितस्य एकस्य मित्रस्य गृहम् प्रैषयत्। रामेण परित्यक्ता सीता लवकुशाविव, दुष्यन्तेनानभिज्ञाता शकुन्तला च भरतमिव तत्रैव निवसन्ती अरुणा यथासमयम् एकं सुन्दरं पुत्रम् अजनिष्ट। अरुणायाः पिता, माता, अनुराधाचापि तत्रैवागताः।

अकृतापराधं निष्पापं निर्मलं निष्कपटं च पुत्रस्य मुखमवलोक्य अरुणाया हृदि प्रवृद्धो वात्सल्योद्रेकः तामभिभूतामकरोत्। अन्येद्युः सद्योजातः शिशुर्यदा तस्याः स्तनाग्रं मुखे गृहीत्वा अचूषीत् तदा तं स्वदुग्धं पाययन्ती अरुणा न केवलं स्वर्ग्यमानन्दमन्वभूत् मातृगौरवस्य रसोऽपि तस्यै अद्वितीयोऽलौकिक

इव चासीत्।

तस्याः पिता माता च तं शिशुं निःसन्तानाभ्यां जायापतिभ्यां दातुमैच्छताम्। अविवाहिताया मातुर् अतिशयेन कठिना भवन्ति जीवनस्य मार्गाः। पितुर्नाम्नः प्रश्ने समुपस्थिते किमुत्तरं तस्या भविष्यति? पुत्रयुक्ताया अविवाहिताया मातुः विवाहे सम्भावितमसौकर्यमपि चिन्ताया विषय आसीत्। अविवाहिताया मातुः पुत्रः समाजे सम्मानितं स्थानं न प्राप्नोति। इत्यनेकप्रकारैः सर्वे अरुणां प्रबोधयितुं प्रायतन्त।

अनुराधा तु एतादृशम् एकं युगलं तत्र आकारयदेव। कथं पुनर् अरुणा तस्याः स्वकीयात्तनोः जातं तनयं एवमपरिचिताभ्यां निःसन्तानाभ्यां जायापतिभ्यां यच्छेत्। तया सपदि सुव्यक्तम् आमूलं च प्रत्याख्यात एतादृशः प्रस्तावः। विवाहस्य तु सम्भावनामपि अरुणा प्रत्यादिशत्। प्रमोदेन प्रवञ्चिता सा अधुना पुरुषजातिमेव अविश्वसनीयां मन्यते।

**इति प्रथम उच्छ्वासः**

## अथ द्वितीय उच्छ्वासः

राजनीतिशास्त्रे स्वर्णपदकसहितं स्नातकोत्तरोपाधिमतिविशिष्ट शोधकार्यानन्तरं प्राप्तं पी-एच.डी. उपाधिं च आश्रित्य सा अवश्यमेव कस्मिंश्चिद् विश्वविद्यालये महाविद्यालये वा प्राध्यापकपदं प्राप्तुं शक्नोति, इति विश्वस्ता अरुणा पुत्रमादाय पित्रोः गृहं परित्यज्य निर्गता। तस्याः सहपाठिनी सखी रानी मुम्बई महानगर्यां वसति स्म। तस्या निवासस्थानस्य पत्रादेशस्तया प्राप्तः। तस्याः पत्युः साहाय्येन अवश्यमेव सा तत्र स्वात्मानं यथाकथञ्चित् स्थापयिष्यति इत्याशया सा मुम्बईमहानगरीं प्रति प्रस्थिता।

महानगर्यां मुम्बय्यां न कोऽपि कस्यचिदपि विषये किमपि चिन्तयति; प्रत्येकं जन आत्मनि एव व्यापृत ; न कोऽपि जानाति; न कोऽपि प्रक्ष्यति पुत्रस्य पितुर्विषये; एवमालोचयन्ती अरुणा मुम्बईमहानगरीं प्राप्ता।

सायंकाले चतुर्वादनसमये रेलयानं मुम्बई आस्थाने प्रविष्टम्। अज्ञातं स्थानम्; अज्ञाता जना; घोरघटाच्छन्नश्चासीदाकाशः। वृष्टिधारासम्पातेन सर्वत्र जलमेव अदृश्यत। सर्वत्र एव मार्गा अवरुद्धा आसन्। एतादृश्यामवस्थायाम् अदृष्टपूर्वस्य सख्या गृहस्यान्वेषणे काठिन्यमनुभवन्त्या अरुणायाः समक्षं विश्रामकक्षे अवस्थानादतिरिक्तो नासीद्विकल्पः।

सहसा शिशुः रोदितुमारब्धवान्। तस्य शब्देन अरुणा यात्रिविश्रामकक्षे स्थितानां सहयात्रिणाम् आकर्षणस्य केन्द्रमभवत्। अरुणा भुजदोलायां प्रेङ्खोलयन्ती तं शाययितुं प्रायतत। शिशोः रोदनस्य कारणं तु तस्य बुभुक्षा आसीत्, परम् अरुणा अत्र सामान्यस्थले सर्वेषां मध्ये दुग्धदाने सङ्कोचशीला आसीत्। अत्रान्तरे समीपस्थया एकया वृद्धया उक्तम् - पुत्रि, बुभुक्षितोऽस्ति शिशुः, स्तनाग्रं तस्य मुखे प्रदाय दुग्धं पायय। आकुलिता कातरा विमोहिता च अरुणा मुखं भित्तिकां प्रति परावृत्य शिशुं दुग्धं पाययितुं स्तनाग्रं तस्य मुखे अदात्। दुग्धपाने लग्नः शिशुः तूष्णीमभवत्। पुत्रं दुग्धं पाययन्ती अरुणा

अतिशयेनानन्दमन्वभवत्।

मेघस्तु पौनःपुन्येन विरम्यापि तीव्रतरमवर्षत्। अलङ्कारकल्पा स्फुरन्ती सौदामिनी आकाशं समलङ्कुर्वतीव अद्योतत। जलबिन्दुभिर्युक्तो जवानिलः अरुणायाः केशपाशान् विकिरन् भृशमवहत्। अरुणया पुत्रेण सह समस्ता यामिनी यात्रिविश्रामगृहे व्यतीता। प्रभाते आकाशो निर्मलोऽभूत्।

अरुणोऽयं प्रकाशः पूर्वस्यां दिशि भगवतो दिवाकरस्य। निशाजागरणेन ईषल्लोहितापाङ्गाभ्यां लोचनाभ्यां सभयं सशङ्कमितस्ततः पश्यन्ती आत्मजमुत्सङ्गे गोपायन्ती अरुणा मोहमय्या मुम्बईमहानगर्या रेलवेस्टेशनात् निर्गत्य खार-स्थान-निवासिन्याः स्वसख्या रान्याः तस्याः पत्युश्च निवासस्थानं गन्तुम् एकम् आटोयानम् आरुरोह। मुम्बईमहानगर्याम्प्रथममागतामपरिचितस्थानतया भीतभीतां तां निरीक्ष्य प्रतारयन् यानचालको व्यर्थमेव किञ्चित्कालम् इतश्चेतः परिभ्राम्य तयोक्तस्थाने खारे तस्याः सख्या गृहसमक्षं ताम् अवतार्य शतं रूप्यकाणि तस्याः पर्यवञ्चयत।

तदानीं रान्याः पतिः गृहे एवासीत्। अनिन्द्यलावण्यसम्पन्नाम् अरुणां दृष्ट्वैव मलिनमनसः तस्य लम्पटता स्पष्टमभिव्यक्तासीत्। स्वपत्न्या उपस्थितिम् अवसरस्य च श्लक्ष्णताम् अवगम्य प्रकृतिमापन्नः स स्वकार्यार्थं गृहान्निर्गतः।

क्रोडे शिशुदर्शनजनितां रान्या अक्ष्णोः प्रश्नाकुलतां बुद्ध्वा सर्वं वर्णयामीति सङ्केतयन्ती अरुणा स्नानागारं ततश्च विश्रामकक्षमगच्छत्। किञ्चिद्विश्रम्य चायम् अल्पाहारं च गृहीत्वा शिशुं च दुग्धं पाययित्वा स्वस्था सा बालसखीं रानीं तया भुक्तं सम्पूर्णं वृत्तान्तम् अवर्णयत्।

प्रमोदेन सह तस्याः सम्बन्धानाम् अतिशयं, प्रमोदस्य च अर्थलुब्धतया प्रतारणापूर्णस्तस्य व्यवहारः, अतिविश्वस्ततया कामेच्छायाः तीव्रतया च तस्याः संयमपरित्यागः, प्रवञ्चकेन प्रमोदेन सह सहवासस्य परिणामरूपा तस्याः सगर्भता, अमेरिकानिवासिन्या जूही नाम्न्याः कन्यायाः पितुः बृहदाकारस्य व्यापारस्य प्रभुत्वप्राप्त्यै अरुणां वञ्चयित्वा प्रमोदस्य अमेरिकागमनं, तज्जन्या विषमाः परिस्थितयः, शिशोर्जन्म, सर्वं सख्याः समक्षम् अवर्णयत्। तदनन्तरम् अरुणा सखीं रानीं तस्या गृहस्थजीवनविषये सर्वं वर्णयितुं प्रार्थयत।

रानी अवोचत् - जानास्येव त्वं यद्विद्यालयशिक्षानन्तरं मम पिता मां

उच्चतरशिक्षायै महाविद्यालयं न प्रैषयत्। समयात्पूर्वमेव विवाहपाशे बद्धाहं दशवर्षेभ्यः पतिरूपेण पशुना सह जीवनं यापयामि। विवाहात्पूर्वं वैवाहिक जीवनस्य कल्पना अत्यन्तं सुखदा आसन्। मधुयामिनी सर्वासामेव युवतीनां चिरसञ्चितः स्वप्नो भवति। परं मधुयामिन्या मदीयोऽनुभव उत्तरवर्तिनो मम गृहस्थजीवनस्य सूचीपत्रमासीत्। प्रथमायामेव रात्रौ सतीशनामकस्य तथाकथितस्य मम पत्युः हिंसकः स्वभावो मया ज्ञातः। तस्य अत्युग्रा कामुकतापि मह्यं विपत्तिकरा एवासीत्। तस्य कामपिपासां शमयितुं तेन सह लग्नाया मम सम्पूर्णा यामिन्यः अतिक्राम्यन्ति स्म। उपक्रमे आनन्दप्रदापि असाधारण्येन विचित्रा असङ्गता अपरूपाश्च तस्य कामकेलयः सामान्यतया मां तुदन्त्येव। रात्रिजागरेण श्रान्ताया मम प्रातः समयानुरूपं भोजनादिव्यवस्थायां शैथिल्ये सति प्रताडनापात्रम् अपि अहमेवासम्। मम श्वश्रूश्च मां निकृष्टाम् अपकृष्टामनार्यामतिकामुकीञ्चाकार्य सदा मामेवोपालभत। अहमेव तस्याः पुत्रस्य समस्तरसचूषणपरा रात्रौ तस्मै स्वल्पमपि विश्रामसमयं न त्यजामि इत्यासीत् तस्या अधिक्षेपः। मम जीवने शारीरिकसम्बन्धानतिरिच्य प्रणयभावस्य तु चिह्नमपि न वर्तते। सन्तानसुखमपि न मम भाग्ये वर्तते। यदाप्यहं सगर्भाभवं ते बलात् मम गर्भस्रावमकारयन्। वधिकानां गृहेषु शिशवो न जायन्ते। जन्मतः पूर्वमेवैषां वधस्तु एतेषां निश्चितः सिद्धान्तः। एतावदुक्त्वा रानी सगद्गदमरोदीत्।

सशङ्किता अरुणा रानीं सान्त्वयित्वा किञ्चिद्विरम्य ताम् अपृच्छत्–कीदृश स्तावद् व्यवसायः तव पत्युः सतीशमहोदयस्य? पुनश्च सन्तानेच्छा तस्य मनसि किं नितान्तमेव अविद्यमाना?

किञ्चित् स्वस्था रानी प्रत्यवोचत् – लुधियानानगरे एकस्यां शिल्पशालायां कार्यं कुर्वतः सतीशस्य सम्बन्धो मुम्बईमहानगर्यां कार्यं कुर्वतः कस्यचित् तस्करगणस्य सदस्येन सहाभवत्। अधिकधनस्य लोभेन आकृष्टः सतीशो लुधियानानगरं परित्यज्य अत्रागतः। अत्र पुनर् अपराधिजगतः तस्करसमूहेन सह मम पत्युः सतीशस्य सम्बन्धान् अहं सुष्ठु जानामि। तस्करसमूहमध्ये एकस्य पत्नी सर्वेषामेव पत्नी भवति। अतः सतीशस्य पत्नी भवन्त्यपि अहं तस्करसमूहस्य सर्वेषामेव सदस्यानां भोग्यास्मि। कारावासयात्रा तु एतेषां

सर्वेषां कृतेऽपि अति सामान्या। यदापि सतीशः कारावासे भवति तदा तस्य अन्यः कश्चित् सहकर्मी मम रात्रिषु तस्य भूमिकां निर्वहति। एतादृश्यामवस्थायां सन्तानोत्पत्तेस्तु प्रश्न एव निरर्थकः। एवमुक्त्वा सजलनयना सा तूष्णीमभूत्।

एतत्सर्वं श्रुत्वा अत्यन्तं विषमायां परिस्थितौ पतिता अरुणा भीता अवेपत। अधुना दुष्करो दुश्चरो दुःसाध्यश्च मार्ग आसीदरुणायाः समक्षम्। सा अविलम्बमेतत्स्थानं परित्यज्य अन्यत्र गमने एव कल्याणमपश्यत्। सतीश नामकस्य रान्याः पत्युरागते तु तस्याः शीलमपि असुरक्षितं भविष्यति।

एवं चिन्तयन्ती अरुणा रानीमपृच्छत् - कीदृशस्तावत् व्यवसायस्तव पत्युः येन स्वकीयं गृहस्थजीवनमपि गौणतां नीतम्।

रानी प्रत्यवादीत् - व्यवसायार्थमेव हि स लुधियानानगरं परित्यज्य मुम्बईमहानगरीम् आगतः। तस्य व्यवसायविषये विस्तृतरूपेण तु नाहं जाने, परं निश्चितमेव अविधिकस्तस्य व्यवसायः। नैकवारं राजपुरुषा गृहमागच्छन्ति माञ्च दुःस्थितिं प्रापयन्ति। सर्वाधिकं गर्हणीया भवति स्थितिः यदा तस्य कश्चित् सहयोगी राजपुरुषेभ्य आत्मानं गूहितुम् अत्रागत्य नैकदिनानि यावत् तिष्ठति। अतोऽपि परं गर्हितमस्ति यत् प्रत्येकं रात्रौ तस्य कामतृप्तिरपि आवश्यकरूपेण मयैव करणीया भवति।

अरुणायाः श्रोत्रयोः विस्फोट इवाभवत्। त्रस्ता क्रुद्धा च सा साश्चर्यमपृच्छत् - किं तव पतिरेव त्वत्त एतादृशं कुत्सितं कर्म अपि कारयति ? न च त्वया कदाप्यस्य विरोधः कृतः ?

विरोधस्यैवैतत्फलं यत् चपेटाघातैः मुष्टिप्रहारैः कदाचित्तु यष्टिकाप्रहारैरपि नित्यं प्रताडिता अभवम्। अन्ततोगत्वा दुर्भाग्यग्रस्ता आत्मसमर्पणभावेन अधुना तु निर्विरोधमेव सर्वं करोमि। यदा पतिरेव निष्ठुरो विश्वासघाती कुटिलाचारश्च तदा कीदृशं किमर्थं च पातिव्रत्यम् ?

अरुणा अबोधत् यत् सतीशस्तस्य तस्करसंसारश्च भयङ्कराणामपराधिनां समूहोऽस्ति। नारी तु तेषां कृते केवलं मनोरञ्जनसाधनम्। तेषां समक्षं सम्बन्धानां तु न किमपि महत्त्वं वर्तते। सतीशोऽथवा कश्चित् तस्य सहकर्मी अत्रागच्छेत् ततः पूर्वमेव स्थानमिदं त्यक्तव्यम्। एतद्विचिन्त्य सा रानीं स्वाभिमतमकथयत्।

अरुणायाः परिचितः कोऽप्यन्यः तस्यां महानगर्यां नासीत्। रान्याः परिचिता

सूजी नाम्नी एका महिला चर्चगेटक्षेत्रे प्रवासीयगृहतुल्यमेकमतिथिगृहं प्रणयति स्म। सामान्यतया तु लम्पटाः सर्वत्र एव सन्ति, परं मम कथनानन्तरं सूजी तव सुरक्षां प्रति अतन्द्रा स्थास्यति। तस्याः संरक्षणे न तत्र कोऽपि भयहेतुः सम्भवति। इति रानी अरुणां प्राबोधयत्।

रानी दूरभाषेण सूजीं सर्वं वर्णयित्वा अरुणायै पूर्णरूपेण सुरक्षिताय आवासाय तां प्रार्थयत। अत्यधिकं शङ्किता अरुणा भोजनात् पूर्वमेव रान्या गृहात् चर्चगेटक्षेत्रे स्थितं सूजीसञ्चालितम् अतिथिगृहं प्रति चलिता। अरुणां प्रेष्य रानी अपि चिन्तामुक्ताभूत्।

गृहत्यागसमये अरुणायाः पिता तस्यै पर्याप्तमात्रायां धनराशिमयच्छत्। कतिपयस्वर्णाभूषणानि अपि तस्याः पार्श्वे आसन्। एवं तात्कालिकरूपेण पर्याप्तं धनं तस्याः पार्श्वे आसीत्। यदा अरुणा तत्र अतिथिगृहे स्वसुरक्षाविषये निश्चिन्ताभवत् तदा समाचारपत्रेषु विज्ञापनान्याश्रित्य आजीविकां प्राप्तुं प्रायतत।

कस्मिंश्चित् महाविद्यालये प्रवक्तुः पदं प्राप्तुं तस्याः प्रयास आसीत्। परं महाविद्यालयेषु प्रबन्धसमितीनाम् अधिकारिणां प्रायः भ्रष्टाचारलिप्ततया दृढसङ्कल्पस्वभावा अरुणा योग्यतादृष्ट्या सर्वोत्तमा भवन्त्यपि न कुत्रापि प्रवक्तुः पदं प्राप्तुमशक्नोत्। मुम्बईमहानगर्यां नैयमिकमहाविद्यालयानतिरिच्य शिक्षा व्यवसाये लग्नानि सन्ति असंख्यानि शिक्षाकेन्द्राणि। एषु केन्द्रेषु नियमितरूपेण शिक्षाग्रहणानन्तरं विद्यार्थिनः स्वयंपाठिरूपेण परीक्षा दत्त्वा शिक्षाक्षेत्रे प्रगतिं कुर्वन्ति। यदा अरुणा कस्मिंश्चिदपि महाविद्यालये प्रवक्तृरूपेण नियुक्तिं प्राप्तुं नाशक्नोत् तदा तया एतादृशेषु शिक्षाकेन्द्रेषु यत्रकुत्रापि नियुक्त्यर्थम् अध्यवसाय आरब्धः। चर्चगेटक्षेत्रे एव स्टार अकादमी नामके एकस्मिन् शिक्षाकेन्द्रे सा नियुक्तिम् अवाप्नोत्। अस्मिन् केन्द्रे घटिकाद्वयं प्रातःकाले एतावत्कालमेव च मध्याह्नोत्तर काले तया अध्यापनकार्यं करणीयमासीत्। पञ्चसहस्रं रूप्यकाणि तस्या वेतनं निश्चितमासीत्। यद्यप्यरुणा अधिकं समयं दत्त्वा अधिकं धनार्जने समर्था आसीत् परं शिशोः स्तनन्धयत्वात् अधुना एतावन्मात्रं समयं दत्त्वा पञ्चसहस्ररूप्यकाणां वेतनं तस्यै पर्याप्तमासीत्।

एकदा यदा रान्याः पतिः सतीशः तस्करगणस्य किञ्चित् विशिष्टं कार्यं सम्पादयितुं गृहात् दूरं गत आसीत् तदा रानी दूरभाषेण अरुणां स्वगृहम्

आकारयत्। घण्टिकाशब्देन सहैव द्वारमुद्घाट्य रानी शिशुसहितामरुणां सस्नेहमभ्यनन्दयत्। अरुणायाः पुत्रं करुणनाम्ना आकार्य उत्सङ्गे परिष्वज्य वात्सल्यातिरेकेण पौनःपुन्येन चुचुम्ब। अल्पाहारसहितं चायपानानन्तरं सख्योः परस्परं वार्तालाप आरब्धः।

व्यवसाये विनियोगप्राप्तौ कीदृशो भवत्या अनुभवः ? प्राप्तो नियोगो भवत्यै तुष्टिकरो वर्तते न वा ? रानी अपृच्छत्।

अरुणोदतरत् - विनियोगस्तु मया प्राप्तः, परं नैष मम योग्यतानुरूपः। महाविद्यालये प्रवक्तुः पदे नियुक्त्यर्थं यत्राप्यहं गता, नियोजकान् अधिकारिणो मम यौवनस्योपभोगाय एव उत्सुकानपश्यम्। एतादृशेऽभ्युपगमाय नाहं प्रस्तुता आसम्। चर्चगेटक्षेत्रे स्टार अकादमी नामके शिक्षाकेन्द्रे नियोग उपलब्धः। पञ्चसहस्रं रूप्यकाणि प्रतिमासं ते मह्यं प्रदास्यन्ति। राजनीतिशास्त्रे वैचक्षण्ययुक्ता अध्यापनकार्ये च वैशिष्ट्ययुक्ताहमित्येवं समाख्याप्राप्त्यै किञ्चित् कालं यावदत्राध्यापनं मया स्वीकृतम्। परमतिविचित्रेयं स्थितिर्यत् का कथा व्यवस्थापकानामधिकारिणां सहकर्मिणामध्यापकानाञ्च विद्यार्थिनोऽप्यत्र युवतीमध्यापिकामेवं पश्यन्ति यथा सा तेषामेव कामतृप्त्यर्थं तत्र प्रस्तुता भवेत्। अत्र हि सर्वेषां दृष्टौ मालिन्यमेव दरीदृश्यते।

रानी अकथयत् - सूजी विश्वसनीया महिलास्ति। तस्करगणनेतारोऽपि तस्या निर्देशमनुपालयन्ति। क्रुद्धा तु सा अत्यन्तं भयङ्करा। तस्याः संरक्षणे तत्र त्वं पूर्णतया सुरक्षितासि। सूज्या भयङ्करतां ज्ञात्वा स्तब्धा भीता च अरुणावोचत् - यद्येवम् अपि सुरक्षिताहं सूज्याः सान्निध्ये ?

मुम्बईमहानगर्यां केवलं तत्रैव त्वं सुरक्षिता। सर्वाधिकशक्तिसम्पन्नेन तस्करगणाधिपतिना सह तस्याः सम्बन्धोऽद्वितीयः। यदि सा इच्छेत् स्त्रियं पुरुषं वा यं कमपि यमलोकं प्रापयितुं शक्नोति। तस्याः सुरक्षायां स्थितां त्वां कश्चिदपि अङ्गुल्यापि स्प्रष्टुं न शक्नोति।

करुणं सावधानं पश्यन्ती रानी अरुणामपृच्छत् - शोभनाङ्गप्रत्यङ्गवानयं करुण आकृत्या किं प्रमोदमनुकरोति ? यद्येवं तर्हि अत्यन्तं सुन्दरव्यक्तित्व सम्पन्नो भविता प्रमोदः। अरुणा उदतरत् - यदि प्रमोदस्य व्यक्तित्वमत्याकर्षकं नाभविष्यत् तदा प्रमोदे ममासक्तेस्तु प्रश्न एव नाभविष्यत्। रानी अवोचत् -

प्रमोदेन सह सम्बन्धं विना तु अतिप्रियस्य अस्य करुणस्य जन्म एव सम्भवं नासीत्। मातृत्वप्रसादस्तु त्वया प्रमोदेन सह सम्बन्धेनैव प्राप्तः।

किञ्चिद्विचलिताया अरुणाया प्रतिवचनं तु यथार्थपरमासीत् - एष अस्माकं समाजः प्रमाणपत्रेषु विश्वसिति। रात्रौ केनापि सह शेष्व, प्रातःकाले पत्युः शय्यातो यदि उत्तिष्ठसि तदा त्वं सदाचारिणी असि। सन्तानोत्पत्तिस्तु यथारुचि केनापि सम्भवति परं पितुः स्थाने नाम तु पत्युः एव स्थास्यति। एष एव सदाचारः। अविवाहिता माता तु समाजे कलङ्किनी मन्यते। कथय पुनः तव पतिः कस्मिन् कार्ये प्रवृत्त्यर्थं गतः ? वार्ताक्रमं परिवर्तयितुं सा अपृच्छत्।

रानी अवोचत् - तस्य कार्याणि तु रहस्यपूर्णानि भवन्ति। हत्या, अपहरणं, लुण्ठनं, चौर्यं, किमपि सम्भवति। कुत्रैतत्करणीयमिति तु समयात्पूर्वं स स्वयमपि न जानाति। पुलिसबलेन सह आभिमुख्येन प्रतियुद्धस्यापि सम्भावना तु सदैव तिष्ठति। जीवितः पुनरागमिष्यति न वा सर्वमेवाज्ञातं भवति।

एवं वार्तासु मग्ने ते द्वे अपि भोजनमकुरुताम्। तदनन्तरमरुणा स्वकीयं निवासं सूज्या अतिथिगृहं प्रति अगच्छत्।

तस्मिन्नेव दिने सन्ध्यासमये सप्तवादनकाले मुम्बईदक्षिणतः संसत्सदस्यस्य श्रीमतः करमरकरस्य युवती पुत्री सशस्त्रेण रक्षापुरुषेण सह पण्यशाला भिगमनार्थम् आगता। सुश्री करमरकरमहोदया कारयानात् निर्गत्य रक्षापुरुषेण सह पण्यशालां प्रविष्टा। अत्रान्तरे सतीशस्य नेतृत्वे तत्र स्थितस्य तस्करगणस्यैकः सदस्यः सुश्रीकरमरकरस्य कारयानस्य चालकं तस्मात् स्थानात् दूरमनयत्। गणस्यैवान्य एकः सदस्यः तस्य स्थाने उपाविशत्। द्वौ सदस्यौ चालकं बलान्निगृह्य दूरमेवारक्षन्। पण्यशालातः प्रत्यागता करमरकरस्य पुत्री यदा स्वस्मिन् कारयाने प्रविष्टा, तया सहैव झटिति एकः सदस्यो दक्षिणतः अन्यश्च वामतो याने प्रविष्टौ, द्वाभ्यां सुश्रीकरमरकरस्य रक्षापुरुषो निगृहीतः। चालकस्थाने स्थितः सदस्यः अत्यन्तं शीघ्रतया कारयाने स्थितां श्रीकरमरकरस्य पुत्रीमपहृत्य अधावत्। अत्रान्तरे रक्षापुरुषेण चालिताया द्विनालिकाया निर्गतया गोलिकया गणस्य एकः सदस्यो मृतः, अन्यश्च पलायितः।

श्रीकरमरकरस्य पुत्र्या अपहरणस्य समाचारो दावानल इव मुम्बई महानगर्यां प्रासरत्। सम्पूर्णा महानगरी भूकम्पेन इव क्षुब्धाभवत्। संसत्सदस्यस्य

नवयुवती पुत्री, को जानाति अपहरणकर्तारः तया सह कथं व्यवहरिष्यन्ति। तस्याः कौमार्यभङ्गस्य सम्भावना श्रीकरमरकरस्य अन्तरात्मानं दुनोति स्म।

श्री करमरकरः स्वपुत्र्या अपहरणं तस्यैव चयनक्षेत्रस्य विरोधिदलस्य विधानसभासदस्यस्य कौण्डकरस्य कृत्यममन्यत। तेनैव अपराधिजगतो गणाधिपतिः अस्मै कार्याय नियुक्तो भवेत्। करमरकरकौण्डकरयोर्मध्ये राजनीतिकशत्रुताया एष परिणाम आसीत्। उभावपि सशक्तौ नेतारौ आस्ताम्। तयोः राजनीतिकशत्रुताया भक्ष्यं निर्दोषा करमरकरकन्याभूत्। एतस्या युवत्या अकारणमपहरणमनैतिकं तु आसीदेव, अमानवीयमप्यासीत्। सर्वेष्वेव क्षेत्रेषु व्यापकरूपेण एतां घटनां प्रति रोष आसीत्, कौण्डकरश्च समाचारपत्रेषु निन्दापात्रमभूत्। सर्वां स्थितिमालोच्य गणाधिपतिः करमरकरस्य पुत्र्याः किं करणीयमिति कौण्डकरमपृच्छत्। किंकर्तव्यविमूढः कौण्डकरस्तु निर्णये अक्षमत्वात् गणपतिमेव यथोचितं निर्णेतुमकथयत्। सा कौंडकरविरुद्धं किमपि वृत्तान्तविवरणं न कथमपि दद्यादित्येकमात्रं समय आसीत्।

एवं दुर्वृत्तानां कृष्णकर्मणां खलानामधिकारे स्वतन्त्ररूपेण आगतां करमरकरपुत्रीं नैके पापिष्ठा बलात्कारेण मृतप्रायामकुर्वन्, मृतां च मत्वा रात्रिसमये तस्या अपहरणकर्तारः तां समुद्रतटे प्राक्षिपन्। प्रातःकाले धीवराः तां दृष्ट्वा शवं मत्वा पुलिसकेन्द्रं तदसूचयन्। राजकर्मचारिणो मृतप्रायां तां करमरकरपुत्रीं स्वास्थ्यालयमनयन्।

स्वास्थ्यालये उपचारानन्तरं स्वस्था सा समीक्षणनिरीक्षणपरान् राजपुरुषान् अकथयत् यत् तस्या अपहरणविषये सा जानाति, कौमार्यभङ्गकालेऽपि सा सचेतना आसीत्। नातः परं सा किमपि जानाति। न चापि सा प्रत्यभिजानाति बलात्कारिणः। एवं शक्तिशालिनः कौण्डकरस्य दुष्टा राजनीतिः निर्दुष्टामेकां युवतीमकलङ्कयत्।

करमरकरस्य पुत्री ऋचा स्टार अकादम्या एव छात्रा आसीत्। यद्यपि ऋचा अरुणायाः शिष्यासीत्, परं सा सांसदपुत्री वर्तते एतत्तु अनवगत मासीदरुणायाः। अधुना तु एतत् सर्वं ज्ञात्वा अरुणा अत्यन्तं विचलिताभवत्।

राजनीतिकभाषणेषु मानवाधिकाराणाम् उग्रसमर्थकाः सन्तोऽपि हिंसकानां गतिविधीनां निरन्तरं प्रणेतारो नेतारः, तेषामनुज्ञायां गतिशीलो मुम्बईमहानगर्या

दादावादः, केवलमात्मकेन्द्रिताः सांसदा विधानसभासदस्याश्च, एषां सर्वेषामेव कुत्सितां राजनीतिं दृष्ट्वा मनसि जुगुप्साभाव उत्पद्यते। राजनीतिशास्त्रस्य सिद्धान्त पक्षस्य प्राध्यापिकायाः प्रखरप्रतिभासम्पन्नाया अरुणायाः समक्षं करमरकरस्य पुत्र्या ऋचाया अपहरणस्य बलात्कारस्य च घटना वर्तमानाया राजनीतेः प्रायोगिकं रूपमासीत्। राजनीतिशास्त्रं शिक्षयितुं शिक्षाक्षेत्रे आगता विदुषी अरुणा राजनीत्यां भ्रष्टाचारविरुद्धासीत्। विद्यार्थिनो राजनीतिशास्त्रे प्रबुद्धान् विधाय तान् देशस्य राजनीत्यां प्रायोगिकरूपेणावतार्य भारते भ्रष्टाचारमुक्तस्य स्वस्थस्य च समाजस्य संरचना अरुणाया लक्ष्यमासीत्।

ऋचाकाण्डस्य विरोधे 'वनिता आश्रमः', 'नारी सभा', विरोधिदलानां महिलाप्रकोष्ठाश्च सक्रिया अभवन्। एते सर्वे अन्येषां चानेकेषां सामाजिक जनसमूहानां सदस्याः सी.बी.आई. द्वारा ऋचाकाण्डस्य अन्वेषणपरीक्षणाय अभ्यर्थनामकुर्वन्। प्रतिदिनं व्यूहक्रमेण एकत्रीभूत्वा, जनयात्रासु च उच्चैः उद्घोषं कुर्वन्तो जना विरोधप्रदर्शनान्यकुर्वन्। 'बलात्कारिणो दण्डनीयाः', 'ऋचाया अपहरणकर्तारो रज्जुपाशेन हन्तव्याः', 'न्यायो नारीणामधिकारः' इत्यादय उद्घोषा गगनं व्याप्नुवन्। एवंविधानि प्रदर्शनानि उत्तरोत्तरं प्रबल तराण्यभूवन्। एकस्मिन्नवसरे तु करमरकरस्य कौण्डकरस्य च समर्थकाः परस्परमयुध्यन्त।

चर्चगेटक्षेत्रे एकस्यां जनसभायाम् अरुणापि सम्मिलिताभवत्। तत्र भाषणं कुर्वती सा नारीविमर्शमाश्रित्य मञ्चतः सभाजनान् समबोधयत्। ऋचाकाण्डम् अधिकृत्य सा उच्चैः स्वरेण जघन्यकर्मणोऽपहारकान् अनिन्दत्। राजनीतिज्ञानां पारस्परिके संघर्षे अकृतापराधाया ऋचाया भक्ष्यरूपेण प्रयोगं तु सा अत्यन्तं निकृष्टं निन्दनीयं विगर्हणीयञ्चाकथयत्। अस्मिन् सन्दर्भे प्रतिभासम्पन्नाया स्तस्या वैदुष्यपूर्वकमभिव्यक्तान् विद्रोहपूर्णान् निशमनकारिण आन्दोलयतो विचारान् श्रुत्वा सभायां स्थिता जना अत्यधिकं प्रभाविता अभवन्। अधिकांशैः समाचारपत्रैः अरुणाया वक्तव्यस्य विस्तृतं विवरणं सचित्रम्प्रकाशितम्। एकस्मिन् समाचारपत्रे तु अरुणाया भाषणं शब्दशः प्रकाशितमासीत्। करमरकरः कौण्डकरश्च उभावपि समाचारपत्रेषु अरुणाया वक्तव्यमपठताम्। अत्यधिक म्प्रभावितौ उभावपि तां द्रष्टुमुत्सुकावभवताम्।

समाचारपत्रेषु अरुणाया वक्तव्यं पठित्वा ऋचा अकादम्या दूरभाषेण अरुणया सह वार्तालापं कुर्वती सगद्गदमरोदीत्, दुःखस्यास्मिन् क्षणे गृहमागत्य तस्या मार्गदर्शनार्थं च अरुणाम्प्रार्थयत।

अरुणायाः पुत्रः करुणस्तु प्रातरारभ्य सायम्पर्यन्तं शिशुनिकेतने एवातिष्ठत्। मध्याह्नकाले तत्रैव गत्वा अरुणा तं दुग्धमपाययत्। दिवससमये शिशुनिकेतनस्य धात्र्यो गोदुग्धेनापि तं पोषयन्ति स्म। ऋचया आमन्त्रिता अरुणा तस्या गृहमगच्छत्। रुदतीं तां समाश्लिष्य अरुणा तां प्राबोधयत् - न त्वं पापिनी, नापि दुराचारिणी, त्वं तु हिंसकानां पशूनां भक्ष्यभूता अत्याचारस्य केन्द्रमसि। नायं कालो रोदनस्य। त्वया तु विद्रोहिण्या सत्या भ्रष्टाया व्यवस्थाया विरोधे उत्थातव्यम्। अन्यायस्य आमिषं भूत्वा दीर्घकालं यावत् जीवितापेक्षया सम्मानपूर्वकं चतुर्थांशमात्रं जीवनं श्रेयस्करम्। समाजे विचरतामधमवृत्तीनां जघन्यानां दुरात्मनां पापिष्ठानां विरोधाय आत्मन्यपि आंशिकरूपेण तेषां गुणानां विनिवेशो नीतिदृष्ट्या अपरिहार्यः। महिलात्राणनामकः सामाजिको जनसमूहो न केवलमस्माकं पथप्रदर्शकोऽस्ति अपितु अत्याचाराणां विरोधे सशस्त्रम् अभियानमपि नीतियुक्तं मन्यते। अरुणा महिलात्राणनाम्ना जनसमूहेन संयुज्य तस्य गोष्ठीषु निरन्तरमागमनाय ऋचां न्यमन्त्रयत। मुम्बईमहानगर्यां महिलोत्पीडनविरोधे क्रान्तिस्तु समयस्य महती आवश्यकता वर्तते। अरुणाया उपन्यासेन ऋचा आत्मानं स्फूर्तियुक्तामन्वभवत्।

श्रीकरमरकरो गृहे एवासीत्। ऋचा अरुणां पितुः कक्षमनयत् तयोः परस्परं परिचयञ्चाकारयत्। करमरकर ऋचाकाण्डमधिकृत्य अरुणाया भाषणस्य सचित्रं समाचारं दैनिकसमाचारपत्रेषु प्रातरेवापठत्। स स्वयमेव अरुणां द्रष्टुम् उत्सुक आसीत्। तामभ्यनन्दयन् सोऽब्रवीत् - स्वागतमत्रभवत्याः। प्रातः समाचारपत्रेषु भवत्या विचारान् पठित्वा अत्यन्तं प्रभावितोऽस्मि। यत्सत्यम् ऋणी अस्म्यहं अत्रभवत्याः। भवती मम पुत्र्या हृदि पुनर्जिजीविषामुदपादयत्। किञ्चित् सङ्कुचिता दुःखिता चारुणा सलज्जम् उदतरत्- श्रीमन् क्वाहं तिष्ठामि, परं मानवसमाजे विचरतां पशूनां व्यवहारं दृष्ट्वा मनः चेखिद्यते। व्यथितः क्षुब्धश्च जनो यथासम्भवं यत्काञ्चित् प्रतिक्रियां व्यनक्त्येव। भवानेव कथयतु, अत्र घटनाक्रमे ऋचायाः को दोषः ? तया सह एतादृशं पतितमाचरणमत्यन्तं

गर्हितम्। सांसदः अत्रभवान् न किमिति एतादृशं प्रश्नं संसदि उत्थापयति? कदा पर्यन्तं नारीणां यौनशोषणं निरन्तरं स्थास्यति? एवं तर्कयन्त्या अरुणायाः स्वरे विद्रोहस्य भावः स्पष्ट आसीत्।

बाल्यावस्थात एव राजनीतिक्षेत्रे सक्रियोऽनुभवसम्पन्नः करमरकरः अरुणायाः स्वरे अन्तर्हिताम् ओजस्वितां तत्क्षणमेव समवाबुधत्। स च अरुणायामेकां सर्घषशीलां नारीं प्रबुद्धां च राजनेत्रीमपश्यत्। व्यक्तञ्चावदत् – समाचारपत्रैर्मया ज्ञातं यद् भवत्या 'राजनीत्यामपराधबोधः' इति विषयमधिकृत्य शोधकार्यं कृतम्। विदुषी अत्रभवत्येव काञ्चिदुपाय परिकल्पनामुपन्यस्यतु। अवश्यमेव भवदीयाम् उपायपरिकल्पनां लोकसभा सदने उपस्थापयिष्यामि, इत्युक्त्वा तूष्णीमभवत्।

महिलात्राणजनसमूहस्य तत्त्वावधाने नारीः प्रति निरन्तरं क्रियमाणान् अपराधान् शमयितुमपराधिनश्च दण्डयितुं प्रयासाः सम्भवन्ति। अत, ऋचा अवश्यमेव उक्तजनसमूहस्य सदस्या भवेत् इति सुनिश्चितं कृत्वा अरुणा सूज्या अतिथिगृहं प्रत्यागता।

'महिलात्राणम्' चर्चगेटक्षेत्रे एका नारीणां संस्था वर्तते। पुरुषाणामत्याचारैः पीडिता, यौनशोषणेन च प्रताडिता मुम्बईमहानगर्याः सर्वा एव महिला उक्तसंस्थानस्य औपचारिकरूपेण अनौपचारिकरूपेण वा सदस्याः सन्ति। अत्याचाराणां शोषणस्य च विरोधे स्वरस्य उद्घोषः, पीडितानां महिलानां कृते न्यायस्य व्यवस्था, पतितानामुद्धारश्च संस्थायाः प्रमुखोद्देश्यानि आसन्। महानगर्याः प्रसिद्धा समाजसेविका श्रीमती कणिकादेवी अस्याः संस्थाया अध्यक्षा आसीत्। प्रथमं प्रणयिनः पुनश्च पत्युरत्याचारैः पीडिता, पत्या परित्यक्ता श्रीमती सञ्जना अस्याः संस्थायाः सचिवपदमलमकरोत्। महिलात्राणसंस्थायाः समागमे ऋचा करमरकरस्यापहरणबलात्कारादिजन्यमपमानमाश्रित्य प्रस्तावो विचारार्थं प्रस्तुतः। अरुणायाः प्रभावपूर्णः तर्क आसीत् यत् युवतिः राजनीतिज्ञस्य कन्यास्ति अथवा सामान्यस्य कस्यचित् श्रमिकस्य, तस्याः पिता सांसदोऽस्ति अथवा कश्चित् सामान्यः कर्मकरो, यदापि कदाचित् नार्या सह किञ्चिदमर्यादितं भवति एषा संस्था तस्या रक्षार्थं, तस्याः साहाय्यार्थं सदैव तत्परा तिष्ठतु। सशक्तरूपेण प्रस्तुतः तर्केण च पुष्ट एष प्रस्तावः समागमे

सर्वैः स्वीकृतः।

स्टार अकादम्यां प्राध्यापकरूपेण नियुक्तिं प्राप्य आगताया अरुणाया राजनीतिशास्त्रस्य विशेषज्ञाया विदुष्या रूपेण परिचयः अकादम्याः प्राचार्यस्य कार्यालये श्रीमत्या कणिकया श्रीमत्या सञ्जनया च प्राचार्येणैव कारित आसीत्। परिचयान्ते कणिकया सञ्जनया च अरुणायाः सम्मुखमस्याः संस्थायाः सदस्यता प्रस्ताविता। संस्थायामरुणायाः स्थानं महत्त्वपूर्णमासीत्। एवं सति ऋचामधिकृत्य अरुणया प्रस्तुतस्य प्रस्तावस्यापि महत्त्वमधिकमासीत्।

ऋचाया अपमानस्य विरोधे, दुष्टानपराधिनश्च दण्डयितुं प्रशासनं जागरयितुं समाजं च प्रबोधयितुं चर्चगेटक्षेत्रे एकदिवसाय आप्रातः सायंपर्यन्तं सम्पूर्णे कार्यव्यापारे अवरोधस्य प्रस्तावः समागमे पारितः।

सूजी ऋचाया अपहरणबलात्कारादिके सम्पूर्णे घटनाक्रमे सतीशस्य तस्य गणाधिपतेश्च भूमिकाविषये रानीं समसूचयत्। ऋचाया अपहरणे रान्याः पतिः सतीश एव प्रमुखोऽपराधी आसीत्। गणाधिपतेः सङ्केतमात्रेण स एतत्सर्वं विगर्हितं समपादयत्। न कश्चिदपि जानाति कस्यादेशेन गणाधिपतिः एतद्दुष्कृत्यमकारयत्। सतीशः स्वयमपि गणाधिपतेः सङ्केतादतिरिक्तं न किमपि अवैत्। अरुणा प्रायः रान्याः सम्पर्केऽतिष्ठत्। तयोर्मध्ये दूरभाषेण विचाराणां समाचाराणाञ्चादानम्प्रदानञ्च निरन्तरमासीत्। एकस्मिन् दिने दूरभाषेण रान्या सह आलपन्ती अरुणा अवागच्छत् यद् ऋचाया अपहरणकर्तृगणस्य नेता सतीश एवासीत्। ऋचाया अपहरणानन्तरं सपद्येव नगररक्षिभिः बन्दीकृतः सतीशो नगरपालस्यैव बन्धने तिष्ठति। अत एव स बलात्कारिषु सम्मिलितो नासीत्। पुष्टप्रमाणाभावे केवलं सन्देह एव तस्य बन्धनस्य आधार आसीत्। पत्युः अनुपस्थितिः रान्याः कृते दुःखदायिन्यासीत्, यतो हि प्रत्येकं रात्रौ नवोनवः पुरुषः संरक्षको भूत्वा तया सह शयितुमागच्छति। सर्वेषामेवैतादृशां संरक्षकाणां यौवनरसेन अशेषतः कामतृप्तिस्तु तस्याः कर्तव्यक्षेत्रे गण्यते। कदाचित् कुरूपेणापि, अनाकर्षकेणापि पुरुषेण सह कामक्रीडाया बाध्यता तस्या मनसि वैतृष्ण्यं जनयति।

एतत्सर्वमवगम्य स्तब्धायाश्चिन्तितायाश्च अरुणाया अक्ष्णोः निद्रा तु क्षुब्धचित्तां तां परित्यज्य प्रवासिन्यभवत्। अनियन्त्रितश्चारुणाया अन्तःकरण

व्यापारः कदाचित् प्रमोदविषये कदाचिच्च कामेच्छाप्रवृत्तायास्तस्याः सकृदेव तेन सह संसर्गस्य फलस्वरूपं प्राप्तस्य करुणस्य विषये तां विचारपरम्परा कुलामकरोत्। अस्थिरा अनवस्थिताश्चपलात्मका अधृतिमन्तः पुरुषाः प्रायः अप्रत्येयाः कुटिलाचारा मिथ्याप्रतिज्ञाश्च भवन्ति। रूपलावण्ययुक्तानां युवतीनां यौवनरसपानाय विविधं प्रतिश्रुत्य दृढसौहृदाः संशितव्रताः सरलचित्तास्ताः स्ववाग्जाले निपात्य वञ्चयन्ते। तृप्ताश्च पुनर्, भ्रमरा इव ताः परित्यज्य गच्छन्ति। दृढप्रणयिन्या अरुणया सह ईदृश एवासीत् प्रमोदस्य कामव्यापारः। प्ररूढगर्भां तां परित्यज्य धनलुब्धोऽसौ सर्वं विस्मृत्य गतः। सा तु तस्या गर्भे स्थापितं स्मृतिचिह्नमेव जीवनस्य सर्वस्वम् अमन्यत। करुणस्तु तस्या जीवितमेवास्ति। करुणस्य कृते एव सा परिवारं नगरं च परित्यज्य मुम्बईमहानगरीमागता। अत्र खलु एकाकिनी अरुणा विभिन्नकार्येषु व्यापृततया करुणाय पर्याप्तं समयमपि रक्षितुं न पारयति। दिवाकाले तु करुणः शिशुनिकेतने धात्र्याः संरक्षणे एव तिष्ठति। यद्यपि लब्धावकाशा अरुणापि तं दुग्धं पाययितुं तत्र गच्छति, परं धात्री एव तस्य दुग्धपानादिकानि सर्वाणि कार्याणि अवेक्षते। एवं करुणविषये चिन्तयन्ती द्रवितहृदया अरुणा पार्श्वे सुप्तं करुणं दृढं पर्यष्वजत। एवं विचारप्रवाहे अभिनिविष्टामरुणां निद्रादेवी स्वकीये सुखदेऽङ्केऽस्वापयत्।

अरुणा सूज्याः संरक्षणे तस्या अतिथिगृहे एवावसत्। अरुणाया महिलात्राण संस्थायाः सदस्यता सूज्यै नारोचत। अरुणा रान्याः सखी अस्ति, तस्या एव अनुशंसया अत्र निवसति, एतस्मादेव कारणात् सूजी अरुणायाः सामाजिकं व्यवहारं तूष्णीं स्थित्वा अपश्यत्। परं यदा महिलात्राणसंस्थायाः सदस्याभिः ऋचाया अपहरणस्य शीलभङ्गस्य च विरोधे चर्चगेटक्षेत्रे आप्रातः सायंपर्यन्तं सम्पूर्णः कार्यव्यापारोऽवरुद्धस्तदा सूज्या व्यवसायोऽपि प्रभावितो ऽभवत्। व्यवसायेऽवरोधात् आर्थिकोपक्षयेन क्षुब्धा सूजी महिलात्राणसंस्थां प्रति विषमवमत्।

अरुणया सह आलपन्ती सूजी येनकेनापि कारणेनासन्तुष्टैर्जनैः एवं कार्य व्यापारेऽवरोधस्य अनौचित्यं प्रत्यपादयत्। मुम्बईमहानगर्यामगणिताः सन्ति कर्मकरा ये प्रतिदिनं कार्यं कृत्वैव आजीविकां प्राप्नुवन्ति। एकस्मिन्नपि दिने कार्याभावे सति तेषां कृते भोजनस्य व्यवस्था दुष्करा भवति। एवं कार्यमवरुध्य

सामाजिकन्यायस्य प्राप्तिर्न सम्भवति, अपितु बुभुक्षितान् कर्मकरान् प्रति अन्यायरूपेणैव परिणमति एतादृशोऽवरोधः। कस्या अपि युवत्या अपहरणं बलात्कारश्च निश्चितरूपेण निन्दनीयः, परं व्यावसायिकप्रतिष्ठानानां कार्यव्यापारस्य अवरोधेन न वयं किमप्युद्देश्यं प्राप्तुं शक्नुमः। अपराधिनां बलात्कारिणां निग्रहस्तु सर्वकारस्य कर्तव्यक्षेत्रे आगच्छति। सर्वकारस्य शैथिल्याय निरपराधाः कर्मकराः शक्तिहीना अल्पधनाः क्रयविक्रयोपजीविन आपणिकास्तु नैव दण्डनीयाः। अपिच, सहस्रशः जनानामाजीविकापहरणमपि न कथञ्चित् प्रशस्यमस्ति।

आर्ये, उपयुक्तोऽत्रभवत्यास्तर्कः, परमेतादृशां दुष्कर्मणां विरोधे जनभावनाम् अभिव्यञ्जयितुं यद्यस्ति कश्चिदन्यो मार्गस्तदा कथय, येन तमेव मार्गमनुसृत्य लक्ष्यपूर्त्यै प्रयासं विदध्याम। अरुणायाः प्रश्नेन स्तम्भिता इव सूजी न किमपि वक्तुमपारयत्, अनिमिषदृष्ट्या अरुणां पश्यन्त्येव स्थिता। आत्मानं स्थिरीकृत्य किञ्चिच्चिन्तयित्वा च पुनरवोचत् – शान्तिपूर्णेनावरोधेन विरोधस्याभिव्यक्तिस्तु विनयोपेतः अनतिक्रान्तमर्यादः शिष्टो मार्गो, नात्र मतवैभिन्यं सम्भवति, परं मुम्बईमहानगर्यां भोजनार्जनाय आगतानां लक्षशो निर्धनानां कर्मकराणां दृष्ट्या तु एतादृशामवरोधानामप्रासङ्गिकता स्वभावसिद्धा एव वर्तते। ये प्रतिदिनं परिश्रमेण अत्यल्पं धनार्जनेन अल्पार्घेषु भोजनालयेषु गत्वा उदरगुहां यथाकथञ्चित् पूरयन्ति तेषां कृते तु एतादृशा अवरोधा अनुपपन्ना एव।

अरुणा उदतरत् – आर्ये, युक्तमुक्तं अत्रभवत्या, परं न्यायप्राप्त्यर्थं श्रमिकवर्गः स्वयमग्रे आगत्य अपराधानामपराधिनां च विरोधे सर्वकारं प्रबोधयितुमुच्चैः शङ्खनादं चिकीर्षति। जनतन्त्रे जनमानसं यदप्युचितं मन्यते तदेवमेवाभिव्यनक्ति। अस्यान्दोलनस्य पृष्ठभूम्यां जनसामान्यस्य सहानुभूति र्वर्तते। निर्धना, दलिताः, शोषिताश्च कर्मकरा एवमेव बुभुक्षिताः स्थित्वापि अन्तरात्मनः स्वरं सुव्यक्तं कुर्वन्ति। तेषामभावग्रस्तं जीवनमेव तेभ्य एतादृशं सामर्थ्यं ददाति।

सूजी तु अरुणायाः तर्केण सन्तुष्टा नासीत्। तस्या दृष्ट्या एतादृशा अवरोधास्तु निर्धनानां मुखग्रासं बलात् कवलयन्ति। अत्र विषये तयोर्मध्ये वैचारिकभेदस्तु यथावत् स्थितः। ऋचाया अपहरणे बलात्कारे च अरुणा तु

सूजीमपि सदोषाम् अमन्यत, परं रान्या सह तस्याः सम्पर्कमपेक्ष्य सा तूष्णीमेव स्थिता।

मुम्बईमहानगर्यामरुणायाः परिचयक्षेत्रेण विस्तारं प्राप्तुमारब्धम्। स्टार अकादम्या राजनीतिशास्त्रस्य विदुषी प्राध्यापिका इति तस्या विस्तृता ख्यातिरभवत्। तस्या वैदुष्येण प्रभाविताः स्नातकोत्तरकक्षाणां छात्राः तामत्यन्तं प्राशंसन्, तस्याः शिष्यत्वे च गौरवममन्यन्त। ऋचाकाण्डे तस्या भूमिका तां क्षेत्रस्य सांसदस्य करमरकरस्य समीपमानयत्। नगररक्षिणां दलं ऋचाकाण्डस्य अन्वेषणपरीक्षणे व्यापृतमासीत्। ऋचाकाण्डप्रसङ्गे सांसदः करमरकरः अरुणायाः सामर्थ्यस्य विशालताम् अन्वभवत्। महिलात्राणसंस्थया आरब्धस्य आन्दोलनस्य मुख्यरूपेण सूत्रधारिणी तु अरुणा एवासीत्। ऋचाकाण्डेऽरुणाया योगदानं मुम्बईमहानगर्यामभूतपूर्वम् आसीत्। परिणामतो वर्षान्ते सर्वे सदस्याः सर्वसम्मत्या अरुणामेव महिलात्राणसंस्थाया अध्यक्षां न्ययुञ्जत। सा हि दूरदर्शने, आकाशवाण्यां, समाचारपत्रेषु च पर्याप्तं स्थानमवाप्नोत्। अरुणा शीघ्रमेव सामाजिककार्यकर्त्रीरूपेण सम्पूर्णायां मुम्बईमहानगर्यां ख्यातिमलभत। सामाजिकक्षेत्रे राजनीतिकक्षेत्रे च अभिवर्धमानम् अरुणायाः प्रभावं दृष्ट्वा स्टारअकादम्याः प्राचार्यः तस्या वेतनं वर्धयित्वा पञ्चदशसहस्ररूप्यकाणि प्रतिमासमकरोत्। अरुणा प्राचार्येण वेतने असाधारणरूपेण कृताया वृद्धेः कारणमवगच्छन्ती सस्मितं प्राचार्यस्य धन्यवादमकरोत्।

करुणो जीवनस्य द्वितीये वर्षे प्राविशत्। दिवाकाले शिशुनिकेतने पाल्यमानः करुणः, तस्य हास्यं, तस्य चापलं, तस्य केलयः, तस्य कूर्दनं, तस्य सञ्चरणं, तस्य चेष्टाः, तस्य बुद्धिविलासः अरुणाया जीवनरेखा आसीत्। करुणस्य पितुः विषये सा सदैव तूष्णीमतिष्ठत्। शिशुनिकेतने करुणस्य प्रवेशार्थं मातुर्नाम एव पर्याप्तमासीत्। परं तस्या एकान्तक्षणेषु हृदयस्य पीडा तु तां दुनोत्येव। मेघाच्छन्नासु शारदीयासु च निशासु अनामन्त्रिता अप्यागताः प्रमोदस्य स्मृतयः तस्य हृदये तं प्रति निरन्तरमुपचीयमानां घृणामधिकमेव संवर्धयन्ति। परं तस्य कुटिलाचारस्य, तस्य प्रतिज्ञातिक्रमस्य, तस्य विश्वासभङ्गस्य, तस्य विश्रम्भघातस्य च चर्चां तु सा न कदापि केनापि सहाकरोत्। तस्य विदेशगमनात् भारतस्य नैका युवत्यो लम्पटस्य तस्य कामुकताया ग्रासतां न गताः। एवं

तस्य विदेशगमनमेव श्रेयस्करम्। सति विवाहे, विषयासक्तिपरेण परस्त्रीसेविना तेन सह जीवनस्य कल्पनापि अरुणाया अत्यन्तं कष्टकरी अभविष्यत्, एकाकीभावस्य पीडा तु न तादृशी कष्टदायिनी। स हि तस्याः पुत्रस्य पिता, एतत्तथ्यं तु न विस्मर्तुं शक्यम्। न चापि सा अन्येन केनचिदपि पुरुषेण सह विषयसङ्गविषये चिन्तयितुं शक्नोति।

ऋचापहरणकाण्डे निगृहीतः सतीशः षण्मासावधिपर्यन्तं कठोरकारावासेन दण्डितः। स पूर्वमपि नैकवारं कारागारमगच्छत्। रान्याः कृतेऽपि तस्य कारावासयात्रा विशिष्टा नासीत्। पतिं विनापि रानी एकाकिनी नासीत्। सूजी, स्वयं गणाधिपतिश्च, अन्ये च सर्वे गणसदस्या रान्या विषये सर्वथा सदैव च तत्परा आसन्।

एकस्मिन् रविवासरे अकस्मात् रानी अरुणां द्रष्टुमागता। अवकाशदिनत्वात् करुणोऽपि गृहे एवासीत्। रानी करुणमङ्के निधाय दृढमालिङ्ग्य तं पौनःपुन्येन अचुम्बत्। वात्सल्याभिभूता सा तं समाश्लिष्य अस्फुटवाचा गद्गदपदं तेन सह वार्तालापे मग्नाभवत्। दीर्घकालानन्तरमकस्मादागतां रानीं दृष्ट्वा न्यायालये सतीशस्य षण्मासावधिपर्यन्तं कारागारदण्डव्यवस्थां च स्मृत्वा किञ्चित् शङ्कितारुणा रानीमपृच्छत् - एतावत्कालं यावत् कुत्रासीः ? अद्य कथं मार्गं विस्मृत्य अत्रागता? स्नेहातिरेकेण करुणमेव पश्यन्ती चुचुम्बिषन्ती च सा उदतरत् - अहं तु मार्गं दृढं स्मरामि, अत एव आगतास्मि, त्वं तु न कदाप्यागत्य पृच्छसि यत् अपि तव सखी जीवति न वा ?

त्वं खलु मातृष्वसारं पर्युपतिष्ठ, अहं तावत् चायपानादिकस्य व्यवस्थां करोमि, इत्येवं करुणं कथयन्ती अरुणा भोजनालयं प्राविशत्। वात्सल्यस्य आक्रमणेन क्षुब्धः करुणस्तु भोजनालयं प्रति गच्छन्तीं मातरं प्रति बाहू प्रसार्य रोदितुमारब्धवान्। रानी शाणपुटात् क्रीडनकं निःसार्य करुणं सान्त्वयन्ती तं क्रीडासक्तमकरोत्। शीघ्रमेवारुणा चायमल्पाहारं चानयत्। चायपाने लग्ने उभे अपि परस्परं वार्तालापे प्रवृत्ते।

रानि! सतीशः कदा आगमिष्यति ? अरुणा अपृच्छत्। षण्मासावधिपर्यन्तं कारागारस्य दण्डः। चत्वारो मासा गताः। अधुना तु ऋचाकाण्डस्य विरोधे आरब्धमान्दोलनमपि प्रायः शान्तम्। रान्याः स्वरो व्यङ्ग्यमिश्रित आसीत्। अरुणा प्रत्यवदत् - महिलात्राणसंस्थया प्रारब्धस्यान्दोलनस्य यावानपि प्रभावः

स्यात्, सामाजिकव्यवस्थायाः परिवर्तने तस्य भूमिका नगण्या नास्ति। युवतीनामपहरणं, दलितानां शोषणं, दुष्टानां सशक्तानां चात्याचारं दृष्ट्वापि समाजस्य प्रतिक्रियाशून्यत्वे सति सर्वत्रैवाव्यवस्था भवेत्।

शान्तया वाचा अरुणां समवबोधयन्तीव रानी अवदत् - यस्यामवस्थायां स्तनन्धयेन करुणेन सह एकाकिनी भवती मुम्बईमहानगरीमागता, तद्दृष्ट्या राजनीत्या अपराधिजगतश्च अन्तरालमेव भवत्यै श्रेयस्करम्। कस्मिंश्चिदपि महाविद्यालये राजनीतिशास्त्रस्य प्रवक्तृरूपेण भवत्या नियुक्तिः सम्भवति। सत्कुलीना, आर्यवंशजा, मृदुला, सौम्या, सुकुमारी भवती शोभनं जीवनं यापयतु। करुणस्य व्यक्तित्वविकासः, तस्य भविष्यनिर्माणञ्च अत्रभवत्या एव दायित्वं वर्तते। अपराधिजगता सह संघर्षेण तु न किमपि कल्याणं सम्भवति। सर्वथा अविश्वसनीया भवन्ति अपराधिजगतो गणसदस्याः।

अन्तिमं वाक्यं श्रुत्वा अत्यन्तं विचलिता इव भीता इव अरुणावागच्छत् यत् रानी हि न तत्र स्वयमागता, सा तु गणाधिपतेर्निर्देशेन तेनैव प्रेषिता न केवलं तामवबोधयितुमपितु तां चेतयितुमत्रागता। आकुलचित्ता सा स्वकीयं व्यामोहं विनिगूहन्तीव प्रत्यवदत्- अहं तु केवलमध्यापिका, गणाधिपतिना गणसदस्यैर्वा सह मम संघर्षस्य, सम्बन्धस्य वा तु प्रश्न एव नोत्पद्यते।

अधुना रानी स्पष्टमवोचत् - महिलात्राणसंस्था यथा ऋचापहरणकाण्डं समुत्क्षिप्य तीव्रस्वरेण व्यक्तमुद्घोषयति, भयङ्करः सम्भवति अस्य परिणामः। वज्रपातेन विनाशस्तु अपराधिजगतः सदस्यानामेव भविष्यति। महिलात्राण संस्थायाः सर्वा अपि प्रवृत्तयः अरुणाया एव निर्देशेन सम्भवन्तीति सर्वे एव जानन्ति। अपराधस्त्वपराधिनां व्यवसायः। तेषां विनाशस्य कारणभूतां त्वां तु ते नैव सुरक्षितां त्यक्ष्यन्ति। नाहमधिकं जानामि, परं गतरात्र्यां गणाधिपतिना मम पार्श्वे शयनार्थं प्रेषितो जनः तव विषये एवं कथयति स्म। स तु आवयोः सम्बन्धं न जानाति। तस्मादेतत्सर्वं ज्ञात्वा विचलिता, व्यथिता, क्षुब्धाचाहं त्वां चेतयितुमत्रागता।

अपराधिजगतो गणाधिपतेरुपस्थितं भयं ज्ञात्वात्यन्तं विस्मिता व्याकुल चित्ता चारुणाकथयत् - नाहं कदाप्येतदचिन्तयं यत् महिलात्राणसंस्थाया माध्यमेन ऋचापहरणकाण्डविरोधे कृता मम प्रयासा मामेतादृशीमवस्था म्प्रापयिष्यन्ति। यथार्थावस्थितिं समवबोध्य उपकृतास्म्यत्रभवत्या। पुनश्च, तव

सतीशमहोदयस्य च सशक्ते संरक्षणे स्थिताया मत्कृते न कोऽपि भयहेतुः। परमहं तु अस्याः संस्थायाः सामान्या सदस्या, गणाधिपतिः मामेव सर्वस्य उपद्रवस्य मूलकारणं कथं मन्यते?

राजनीतिशास्त्रस्य विदुषी, वाग्विशारदा अत्रभवती प्रवचनचातुर्येण सर्वानपि सभासदस्यान् मन्त्रमुग्धान् कर्तुं क्षमा। सहस्रेष्वपि जनेषु भवत्या व्यक्तित्वं भवतीमन्येभ्यः सर्वेभ्योऽपि पृथक्करोति। पुनश्च, अध्यक्षा भवती महिलात्राण संस्थायाः सामान्या सदस्या तु नास्ति। अतः सत्स्वपि सर्वेषु केवलं भवत्येवाग्रे गण्यते। दूरदर्शनादिसञ्चारमाध्यमेष्वपि भवत्या एव नाम सर्वोपरि गण्यते। कथय, को दोषोऽत्र गणाधिपतेः यदि स त्वामेव सर्वस्यैव आन्दोलनस्य मूलकारणं मन्यते। भव्यसम्मोहकव्यक्तित्वसम्पन्नायास्तव करमरकरेण सह मैत्री अपि राजनीतिक्षेत्रे अपराधिजगतो गणाधिपतितश्च संवृता नास्ति। पुत्र्या अपहरणेन बलात्कारेण चात्यन्तं खण्डिताशंसो विप्रलब्धो विषण्णश्च करमरकरो न किमपि कर्तुं पारयति। त्वयैव प्रोत्साहितोऽसौ अस्मिन् विषये सक्रियोऽस्ति। नैतत्सर्वम् अनवगतमपराधिजगतो गणाधिपतेः। अत्यन्तं सामान्येनापि कारणेन हत्यासदृशे अपराधेऽपि निःसङ्कोचं प्रवृत्ता भवन्ति एते सदैव क्रुद्धा अपराधिनः। अत एव भीताहं त्वां चेतयामि। अद्यपर्यन्तं यदपि घटितं तत्सर्वं भवती सूजी यथामार्गं प्रकृतं करिष्यति। सूजीमहोदयाया अनुशंसयैव गणाधिपतिः तुभ्यमभयदानं प्रतिसंश्रोष्यति। इत्युक्त्वा रानी तूष्णीमभूत्।

अभिशङ्किता संत्रस्ता चारुणावदत् – एकस्मिन् सामाजिके मञ्चे समाजस्य जागरणार्थं कृता एतादृशः प्रयासा एवं भयानकपरिणामाः सम्भवन्तीति तु नाहं कदाप्यचिन्तयम्। समयानुसारं सन्मार्गदर्शनाय धन्यवादार्हे भवती, सूजी महोदया च। अधुनाहं स्थितिमाकल्य यथोचितं करिष्यामि।

यद्यपि एकवर्षपूर्वमेवारुणा मुम्बईमहानगरीमागता, तथापि एतन्मात्रेऽल्पकाले एव सा महानगर्या महत्त्वपूर्णा व्यक्तिरभवत्। राजनीतिशास्त्रस्य प्रसिद्धा विदुषी, महिलात्राणसंस्थाया अध्यक्षा, सञ्चारमाध्यमेषु चर्चिता, संसत्सदस्यस्य करमरकरस्य विश्वासपात्रं सारुणा स्वकीयैः क्रियाकलापैः अपराधिजगतो न केवलं गणाधिपतेरपितु प्रायः सर्वेषामेव सदस्यानां कृते चर्चाया आकर्षणस्य च केन्द्रमभूत्।

अन्येद्युः मध्याह्नेऽरुणा स्टार अकादम्याः कार्यं समाप्य ऋचामानेतुमागतेन तस्याः कारयानेन तया सह करमरकरस्य गृहमगच्छत्। कारयानादवतीर्य ऋचारुणा च उभे ऋचायाः पितुः करमरकरस्य विशालाकारस्य प्रासादस्य उपवेशनशालां प्रविष्टे। संसत्सदस्यः करमरकरो गृहे एवासीत्। अरुणाया आगमनं ज्ञात्वा स तामन्तर्गृहमाकारयत्।

परस्परमभिवादनानन्तरम् अरुणाया मुखे उद्विग्नमनस्कतां दृष्ट्वा करमरकरः तामपृच्छत्- कथमत्रभवती संभ्रान्ता इव, व्याकुलचित्ता इव, कातरा इव लक्ष्यते? किं तावत्कारणं येन भवत्या मनस उपशमोऽकस्मादपहृतः? पात्रं चेद् भवती मन्यते कथय मां यद्यहं भवत्याः कृते किमपि कर्तुं क्षमः।

अत्यन्तं काठिन्येन ईषत्स्मितरेखया मुखमलङ्कुर्वती अरुणा उदतरत्- श्रीमन्, ऋचाकाण्डस्य विरोधे महिलात्राणसंस्थाया आन्दोलने मदीयां भूमिकामभिलक्ष्य अपराधिजगतो गणाधिपतिः ह्यः मां तर्जितुं सन्देशं प्रैषयत्। गणाधिपतिः ऋचाकाण्डे ईषन्मात्रमपि मम रुचिं नानुमन्यते। अत्यन्तं स्पष्टरूपेण ते मामचेतयन् यदि ते मां ऋचाकाण्डे परिवेष्टितां परिगृह्णन्ति तदा निश्चितरूपेण मां मृत्युदण्डस्य पात्रं विधास्यन्ति।

किं तावत् भवत्या निर्णीतमत्र विषये? करमरकरोऽपृच्छत्।

अहं तु अत्रभवतां सेवायां मार्गदर्शनं प्राप्तुमेवोपस्थितास्मि। नाहं राजनीतिज्ञा। सामाजिकेषु प्रयासेष्वपि यदि अपराधिजगत एवंविधो हस्तक्षेपः किं भविष्यति तावत् सर्वकारस्य न्यायव्यवस्थायाः? भारतसर्वकारस्याङ्गभूतो संसत्सदस्यो भवान्, यदि अपराधिजगतो गणसदस्या अत्रभवतः पुत्रीं ऋचामपहृत्य बलात्कारानन्तरं मृतप्रायां कृत्वा समुद्रतटे प्राक्षिपन् किं ते मां गणयिष्यन्ति? इत्येवमात्मनः शङ्कां व्याहरत् अरुणा।

किञ्चिद्विचलितः सांसदमहोदयोऽकथयत् - अद्वितीयेन साहसेन युक्ता वीराङ्गना अत्रभवती कथञ्चिन्ताकुला ? अलं विषादेन, अहं त्वामभिरक्षामि। शृगालभर्त्सनानि मा ते भयकारणानि स्युः।

अरुणावदत् - श्रीमन् नाहं विषादग्रस्ता, न चाप्येतानि शृगालभर्त्सनानि। सन्देशवाहकाः सन्ति मदीयाः स्वजनाः। अपराधिजगतः सदस्यानां क्रुद्धेषु सत्सु नगररक्षिणो न कमपि रक्षितुं क्षमा, एतत्तु ऋचापहरणकाण्डे ऽस्माकीनोऽनुभवः। अधुना भवान् मम कर्तव्यं कथयतु।

गम्भीरविचारमग्नः करमरकरोऽपि अरुणोपरि विसर्पन्तमपराधिजगत आतङ्कं मन्यमानः तामकथयत् - युक्तमुक्तमत्रभवत्या। नगररक्षिणां रक्षाव्यवस्थायाः स्थितिस्तु अस्माभिः ऋचाकाण्डे दृष्टा एव, अतो भवत्याः कृते एतादृश्याः सुरक्षाव्यवस्थायास्तु नाहं पक्षधरः। किञ्चित्कालपर्यन्तं यदि भवती आन्दोलनं निवर्तयितुमिच्छति, नाहं बाधा भविष्यामि। अलं निराशया। किंचित्कालानन्तरं भवत्याः सहयोगेन पुनः प्रवृत्ता भविष्यामः।

अत्रान्तरे ऋचा तत्रागत्यारुणां स्वजनकं च मध्याह्नभोजनार्थं भोजनकक्षे न्यमन्त्रयत। सङ्कोचशीलापि अरुणा करमरकरपरिवारस्य साग्रहं निवेदनं स्वीकृत्य ऋचां करमरकरं च अन्वयात्।

आहारमश्नन् करमरकरोऽब्रवीत् - अस्मिन् प्रदेशे विधानसभासदस्यः कौण्डकरो दुष्टस्वभावोऽस्ति। ऋचाकाण्डे तस्य भूमिकामहं सुष्ठु जानामि। अपराधिजगता सह तस्य सम्बन्धान् सर्वे जानन्ति, परं भीतो न कोऽपि किमपि कथयति।

अरुणा अपृच्छत् - भवान् गृहमन्त्रालये सर्वं ज्ञापयित्वा अस्य प्रतिकारं किमिति न करोति?

करमरकरः प्रत्यवदत् - सर्वं सम्भवति, परं कौण्डकरः प्रदेशस्य सर्वकार पक्षस्य विधानसभासदस्योऽस्ति। अतो नगररक्षिविभागस्य सर्वेऽप्यधिकारिणः तस्यैव प्रभावे वर्तन्ते। प्रत्यक्षं दण्डस्य प्रहारात् तु सर्वे एव बिभ्यति। एवमपराध कृत्यानि कृत्वापि स सदैव सुरक्षितस्तिष्ठति।

आश्चर्यचकितया दृशा विवृतेन च मुखेन मनःस्थितिमभिव्यञ्जती अरुणा मनसि अचिन्तयत् - अत एवासौ सन्देशेन मामतर्जयत्। सा अन्वभूत् यत् राजनीतिकदलस्य प्रतिनिधिः संसत्सदस्यो भूत्वापि जनाधारहीनः करमरकरः सर्वथा अक्षमोऽशक्तश्च, तद्विपरीतं, कौण्डकरो विधानसभासदस्योऽपि व्यक्तिगत रूपेण जनाधारयुक्तः सर्वथा क्षमः सशक्तश्च नेतास्ति। सर्वकारस्य विभागैः सहापराधिजगतो गणाधिपतयोऽपि कौण्डकरस्यैव संरक्षणे तिष्ठन्ति। सत्यमुक्तं, राजनीतिः न्यायाचारश्च परस्परं विरुद्धस्वभावौ। निष्प्राणे करमरकरस्य संरक्षणे तु सा न किमपि कर्तुं शक्ष्यति, सप्राणस्य कौण्डकरस्य संरक्षणे एव सामाजिक व्यवस्थायां परिवर्तनस्य सम्भावना वर्तते।

सायंकालेऽरुणा दूरभाषेण स्वमनोगतं रानीमसूचयत्। सूजीमपि चाय

पानार्थम् आमन्त्र्य वार्तालापप्रसङ्गे अप्रत्यक्षरूपेण परिवर्तितं स्वकीयं चिन्तनं निवेदयन्ती अरुणा तामवदत् :- महिलात्राणसंस्थया नारीणामधिकाररक्षार्थं विशालस्य आन्दोलनस्य अवरोधस्य च आयोजनं कृतम्। तद्विपरीतं ऋचायाः पिता सांसदः सन्नपि न किमपि कर्तुमपारयत्। एतादृश्यामवस्थायां किमिति अन्येषां कृते असम्बद्धः कश्चिदन्य आत्मनो जीवनं संशये पातयेत्।

अनुभवसम्पन्ना सूजी परिवर्तितम् अरुणायाः स्वरं तत्क्षणमेवावागच्छत्। अरुणाया विचारेषु परिवर्तनं परीक्षितुमपृच्छत् – नावगतो मया अत्रभवत्या आशयः, कस्मिन् सन्दर्भे भवत्याः कथनं वर्तते ?

स्वाशयं स्पष्टं कुर्वती अरुणावदत् – ऋचाकाण्डमाश्रित्यास्ति मम समीक्षणम्। अस्य काण्डस्य विरोधे महिलात्राणसंस्थायाः कार्याणां तुलनायां ऋचायाः पितुः करमरकरस्य भूमिका तु नगण्या वर्तते। सांसदोऽपि नासौ संसदि अस्मिन् विषये चर्चामकारयत्। महिलात्राणसंस्था एव किमिति सर्वान् शत्रुपक्षे कुर्यात्।

अधुना विश्वस्ता सूजी सस्मितमब्रवीत् – बुद्धिमती भवती मत्पुत्रीसदृशा, युक्तियुक्तश्चायं भवत्या निर्णयः। अत्यन्तं भयावहमिदमपराधिजगत्। निष्कारणम् अपराधिभिः सह संघर्षस्तु हानिकरः। त्वं पुत्रेण सह शान्तिपूर्वकं जीवनं यापय। त्वयि अत्यन्तं स्निग्धा रानी अपि त्वदीयेनानेन निर्णयेन निश्चिन्तं स्थास्यति।

अनिष्टापनयनेन विगतोद्वेगारुणा उपशान्तातिष्ठत्। अरुणायाः परिवर्तितस्य व्यवहारस्य, निर्णयस्य च सूचनया गणाधिपतिरवगतः कारितः। गणाधिपतिः अरुणायै जीवनदानमाज्ञापयत्। या नारी सम्पूर्णमपराधिजगत् व्यामोहयत् न सा सामान्या नारी सम्भवति। गणाधिपतिः कौण्डकरश्च दूरभाषेण परस्परं व्यमृशताम्। तस्याः क्षमता उपयोक्तव्या इति निश्चित्य कौण्डकरः अरुणया सह समागमस्य व्यवस्थायै गणाधिपतिमादिशत्। गणाधिपतिरपि तत्कालमेव दूरभाषेण कौण्डकरस्य अभीप्सितं सूजीं सूचयन् अवदत्– कौण्डकरमहोदस्य अरुणया सह समागमस्य व्यवस्था भवत्यैव करणीया इति।

अन्येद्युः सूजी अरुणायाः कक्षं गत्वा तस्याः कुशलवृत्तान्तं पृच्छन्ती तत्रोपाविशत्। वार्तालापप्रसङ्गे सा विधानसभासदस्यं कौण्डकरं प्राशंसत्। संसत्सदस्यस्यापि करमरकरस्य तुलनायां कौण्डकरस्य विशिष्टतां च

प्रत्यपादयत्। एवमालपन्ती सा अकथयत्– महिलात्राणसंस्थाया अध्यक्षा अत्रभवती। अद्यत्वे तु सामाजिकसमस्यानां समाधानेऽपि राजनीतिज्ञानां भूमिका महार्था भवति। संस्थाया अभ्युदयाय कौण्डकरमहोदयेन सह परिचयस्य, सम्पर्कस्य चावश्यकतां यदि भवती अनुभवति, स मम परिचितोऽस्ति। तेन सह परिचये सति कस्मिंश्चित् महाविद्यालये स्थायिरूपेण प्रवक्तुः पदे भवत्या नियुक्तिमप्यहमाशंसामि। कौण्डकरमहोदयस्य लोकप्रियताया विशिष्टं कारणं वर्तते। यः कोऽपि साहाय्यार्थं तस्य पार्श्वं गच्छति स तमुपकारेण बध्नाति। सम्पर्के स्थितान् प्रति आनुकूल्यमनुग्रहशीलता च तस्य स्वाभाविको गुणः। कौण्डकरमहोदयस्य प्रभावेण यदि भवती कस्मिंश्चित् महाविद्यालये स्थायिरूपेण नियुक्तिं प्राप्नोति तदा भवत्या जीवनस्य परिदृश्यमेव परिवर्तितं भविष्यति।

अरुणावदत् – बह्वायामि विशालञ्च अत्रभवत्याः परिचयक्षेत्रम्।

सूजी उदतरत् – विधानसभासदस्यानां चयनसमये महिलात्राणसंस्थायाः सर्वासामपि महिलासदस्यानां मतानि मम प्रयासेन तस्यैव पक्षे गतान्यासन्। तदा श्रीमती कणिका देवी मत्कथनेनैवैतस्मिन् प्रयासे मम सहयोगिनी आसीत्।

सूज्याः तर्केषु याथार्थ्यं, निर्व्याजत्वं, सारताञ्चानुभवन्ती अरुणा कौण्डकरस्य पार्श्वं गन्तुमन्वमन्यत। दिनद्वयानन्तरमेव रविवासरे सूज्या निर्देशेन कौण्डकरमहोदयस्य कारयानं सूज्या अतिथिगृहसमक्षमागत्यातिष्ठत्। किञ्चित् कालानन्तरमेव उत्सङ्गे पुत्रं करुणमुद्वहन्ती अरुणा सूजी च कौण्डकरप्रेषितेन कारयानेन कौण्डकरस्य प्रासादस्य द्वारप्रकोष्ठके स्थिते आस्ताम्।

अरुणा अभिनन्दनार्थं द्वारे समुपस्थितं कौण्डकरं साश्चर्यमपश्यत्। अन्तर्गृहमागत्य कौण्डकरः अरुणां सूजीं च संवेशयोः उपवेष्टुं प्रार्थयत। सूजी कौण्डकरमहोदयस्य सकरुणमरुणया सह औपचारिकरूपेण परिचयमकारयत्। अरुणायाः प्रतिभां, तर्कशक्तिम्, अनुमानशक्तिम्, आकलनशक्तियुक्तां शेमुषीञ्च प्रशंसन्ती सूजी महिलात्राणसंस्थाया माध्यमेन ऋचाकाण्डविरोधे पूर्णव्यवस्थित रूपेण तया सञ्चालितस्यान्दोलनस्य विषयेऽपि तं सर्वमसूचयत्। कौण्डकर महोदयोऽपि अत्यन्तं प्रभावितमात्मानमदर्शयत्।

अरुणापि ऋचाकाण्डस्य विरोधे तस्या भूमिकायाः तुलनायां करमरकरस्य कातरतां दृष्ट्वा तस्या हृदयपरिवर्तनविषये कौण्डकरं सविस्तरमवर्णयत्। अधुना

तस्या अध्यक्षतायां महिलात्राणसंस्था ऋचाकाण्डविषये तटस्था स्थास्यति। सा च विधानसभासदस्यस्य कौण्डकरमहोदयस्य संरक्षणं प्राप्य आत्मानं सुरक्षिताम् अनुभवति इति तं न्यवेदयत्। महिलात्राणसंस्थाया आगामिनो वार्षिकसमागमस्य अध्यक्षतार्थञ्च अरुणा कौण्डकरमहोदयं साग्रहं प्रार्थयत।

कौण्डकरोऽवदत् - युस्मादृश्या राजनीतिशास्त्रस्य विदुष्याः समाज सेविकायाश्च प्रसन्नतायै कदापि कथमपि यत्किञ्चिदपि सम्भवति सर्वं कर्तुं सदैव तत्परः स्थास्यामि।

सूजी अवदत् - अत्यन्तं दयालुरत्रभवान्। स्वर्णपदकालंकृता उच्चशिक्षिता सुयोग्या विदुषी भवन्त्यप्यरुणा उपयुक्तव्यवसायाभावे स्टार अकादमी सदृशे अत्यन्तं सामान्ये एकेन व्यक्तिना सञ्चालिते शिक्षाकेन्द्रेऽध्यापनकार्यं करोति। सर्वं कर्तुं क्षमो भवान् कस्मिंश्चिन्महाविद्यालये राजनीतिशास्त्रस्य प्रवक्तुः पदे नियमितरूपेण अस्या नियुक्त्यर्थं कृपालुर्भवतु। यदाप्यहमस्या एतादृशीमवस्थां पश्यामि, मदीयं मनः चेखिद्यते।

कौण्डकरोऽवदत् - आर्ये, अनुमन्ये अत्रभवत्या बहुमतं कथनम्। अहं खलु मुम्बईमहाविद्यालयस्य प्रबन्धकर्त्र्याः समितेः सदस्योऽस्मि। प्राचार्येण सह विम्रक्ष्यामि। भवादृश्याः सुयोग्याया विदुष्याः समुचितपदे नियुक्तिस्तु समाजस्य दायित्वं वर्तते।

अत्यन्तं मधुरया गिरा अरुणा सविनयमुदतरत् - अर्थत उपकृतज्ञास्मि अत्रभवताम्।

कौण्डकरोऽकथयत् - महोदये, महाविद्यालये प्रवक्तुः पदे भवत्या नियुक्तिस्तु अवश्यमेव भविष्यति। तदर्थं प्रार्थनापत्रं प्रेषयतु अत्रभवती। एतद्विधेषु कार्येषु अनेकदा आगच्छन्ति कतिचिद्बाधाः। कार्यस्य निर्बाधतां सुनिश्चेतुं विमर्शार्थं यदा कदा अत्रभवत्या अत्रागमनमपेक्ष्यते। महिलात्राण संस्थाया वार्षिके समागमे तु अत्रभवत्या दर्शनानि भविष्यन्त्येव। कस्मिन् दिने सम्भावितस्तत्र समागमः?

अरुणा सस्मितमुदतरत् - तत्तु अत्रभवतः सुविधां दृष्ट्वैव निश्चेष्यामः।

अत्रान्तरे सूजी अवदत् - अत्रभवतां कौण्डकरमहोदयानां नैकेषु कार्येषु निरन्तरं व्यापृततया औचित्यदृष्ट्या अधुना अस्माभिः गन्तव्यम्। अनेके दर्शनार्थिनः प्रतीक्षारता बहिस्तिष्ठन्ति। एवं कथयन्ती सूजी उदतिष्ठत्।

बद्धाञ्जलिपुटा अरुणापि कौण्डकरमहोदयमभिवादयन्ती सहैवोत्थिता। कौण्डकरमहोदयोऽपि सम्मानप्रदर्शनार्थं द्वारपर्यन्तमागतः।

कौण्डकरमहोदयस्यैव कारयानेन तस्य चालकः सूजीमरुणाञ्च सूज्या अतिथिगृहसमक्षमवतार्य न्यवर्तत।

विचक्षणः परिपक्वबुद्धिर्दीर्घदृष्टिसम्पन्नः कुशलो राजनीतिज्ञः कौण्डकरो लब्धक्षणोऽरुणाविषये एव ध्याननिष्ठोऽचिन्तयत्। स अरुणायां बहुविधं वैशिष्ट्यम् अन्वभवत्। तन्वङ्गी, अनन्यसाधारणी, अप्रतिमलावण्यसम्पन्नारुणा सुवक्तृत्वे वाक्चातुर्ये च धुरन्धरान् राजनीतिज्ञानप्यतिशेते। स्तम्भकेन यौवनेन मिश्रितं तस्या राजनीतिशास्त्रस्याद्भुतं सैद्धान्तिकं ज्ञानमत्यन्तं प्रभविष्णूनपि समक्षं स्थितान् निशमनकारिणो वाग्रहितान् कर्तुं क्षमते। विवाहितापि पतिविरहिता सा सर्वेभ्योऽपि पारिवारिकेभ्यो बन्धनेभ्यो मुक्ता वर्तते। अरुणायाः सहयोगेन स हि राजनीतिक्षेत्रे दुष्प्रमेयां प्रगतिं कर्तुं शक्नोति।

महाविद्यालये प्राध्यापकपदे नियुक्तिररुणायाः प्राथमिकी आवश्यकतासीत्। एतदर्थमरुणा मुम्बईमहाविद्यालयस्य प्रधानाचार्यं सम्बोध्य लिखितं प्रार्थनापत्रं कौण्डकरमहोदयस्य पार्श्वं प्रैषयत्। मुम्बईमहाविद्यालयस्य कार्यकारिण्याः सदस्यः, पुनश्च विधानसभासदस्यः कौण्डकरो महाविद्यालयस्य प्रधानाचार्यस्य कार्यालयं स्वयं गतः। राजनीतिशास्त्रस्य प्राध्यापकस्य स्थानं सौभाग्येन तदानीं महाविद्यालये रिक्तमासीत्। कौण्डकरस्यादेशात्मकेन स्वरेण विवशः प्रधानाचार्यः तस्येच्छानुरूपमेव सर्वमकरोत्। साक्षात्कारं विनैवारुणां प्राध्यापकपदे न्ययोजयत्। नियमविरुद्धायामपि नियुक्त्यां वेतनमानमन्ये च लाभा नियमानुसारमेवासन्।

मुम्बईमहाविद्यालये राजनीतिशास्त्रस्य प्राध्यापकपदे नियमितवेतनमाने नियुक्तिम्प्राप्यात्यन्तं हर्षितारुणा कौण्डकरमहोदयं प्रति कृतज्ञताभारानतासीत्। महाविद्यालये कार्यग्रहणानन्तरमविलम्बमरुणा मिष्टान्नहस्ता कृतज्ञताप्रदर्शनार्थं कौण्डकरस्य गृहमगच्छत्। गृहमागतामेकाकिनीमरुणां दृष्ट्वात्यन्तमुत्साहितः कौण्डकरः संरम्भपूर्वं तामभ्यनन्दयत्।

महोदय, अत्यन्तं कृतर्णा, अनुगृहीता, उपकारबद्धाहं कृतवेदिन्यस्मि अत्रभवताम्। अविदितेऽस्मिन्महानगरे ईश्वरस्येव अत्रभवतोऽवष्टम्भनं प्राप्य आत्मानं सुरक्षितामनुभवामि। एवमरुणा स्वहृदयोद्गारान् प्राकाशयत्।

काञ्चनदेहयष्टियुक्ताया अरुणाया अभिरामं करपङ्कजं करद्वयेन गृहीत्वा अतिसामीप्यं हर्षातिरेकञ्च प्रदर्शयन् कौण्डकरोऽवदत् – सकलजगन्नियन्ता ईश्वर एव सर्वेषां रक्षकः। राजनीतिशास्त्रस्य प्राध्यापकपदे अत्रभवत्या नियुक्त्यां तु भवदीया विशिष्टा शैक्षणिकयोग्यता एव कारणम्।

अरुणा प्रत्यवदत् – श्रीमन् एतत्तु अत्रभवतां निरभिमानिता, गुणग्राहकता, औदार्यञ्च येन मह्यं जीवनं दत्त्वापि आत्मानमकर्तारमेव मन्यते। महाविद्यालये एषा मम नियुक्तिरस्यां महानगर्यामपाश्रयाया अशरणाया निरुपायायाः शिशुयुक्ताया एकाकिन्या मम कृते तु अतिसबलोऽवलम्बो भविष्यति।

अत्युकृष्टोऽनर्घोऽपि हीरक आत्मनो मूल्यपरिमाणं न जानाति। राजनीति शास्त्रस्य विदुषी अत्रभवती राजनीतिक्षेत्रे मम सहायिका भूत्वा मां मार्गं दर्शयितुं शक्नोति। कौण्डकरः सस्मितमवोचत्।

अरुणा सशुचिस्मितमवदत् – राजनीत्या व्यावहारिकरूपस्य तु भवानेव आचार्यः। व्यावहारिकराजनीत्याः समक्षं शास्त्रज्ञानस्य सामर्थ्यं तु ईषद्गुणम्। प्रत्यक्षज्ञानं हि प्रमाणनिरपेक्षं भवति। अत्रभवतामादेशमात्रेण मुम्बई महाविद्यालस्य प्रधानाचार्यः प्राध्यापकपदे मां न्ययुङ्क्त। किमतोऽधिक मुदाह्रियेत।

सेवकं जलपानमानेतुमादिश्य सहजगम्भीरया गिरा कौण्डकरमहोदयः अवदत्–आर्ये, न मया परिहासे विजल्पितम्। सचिवरूपेण मम कार्यसाधिका भूत्वा यदि अत्रभवती मम सहायिका भवति तदा राजनीतिक्षेत्रेऽहं प्रशस्ततर रूपेण सवैदग्ध्यं कार्यं सम्पाद्यावश्यमेव सफलतासोपानानि तर्तुं शक्नोमि। एवमत्रभवत्यनृणा भविष्यति ममकार्यालयश्चापि सुव्यवस्थितः स्थास्यति।

अरुणा विहस्योदतरत् – परिहसति अत्रभवान्। अस्मिन् क्षेत्रेऽनुभवशून्याहं श्रीमतां कृते न कथमप्युपादेया भवितुं शक्नोमि।

नैवम्। आर्ये, निर्व्यलीकं कथयामि। ऋचाकाण्डे महिलात्राणसंस्थाया आन्दोलने अत्रभवत्याः कुशलं नेतृत्वं दृष्ट्वैव प्रोत्साहितोऽहं भवत्याः समक्षमेवं प्रार्थये। भवत्याः कार्यपटुता सर्वानेव अभिभवन्तीव वशीकरोति। स्वकराग्रेण मिष्टान्नशकलमरुणाया मुखे सन्निवेशयन् कौण्डकरोऽवदत् – जानाम्यहं भवत्या निवासस्थानं महाविद्यालयात् दूरं वर्तते। मम निवासस्थानमपि ततः दूरस्थम्। शिशोः पालनस्य भवत्याः कर्तव्यस्यापि महत्त्वमनुभवामि। सर्वेषामेवैतेषाम्

असौकर्याणामेकमेव समाधानमस्ति यत् मम गृहस्यैको भागो रिक्तो वर्तते। अत्रभवत्या व्यक्तित्वानुरूपञ्चास्त्येतत्स्थानम्। मदीयेयं प्रार्थना यदत्रभवती अत्रागत्य निवासमङ्गीकरोतु। इतो महाविद्यालयोऽपि नातिदूरे वर्तते। शिशुरपि भवत्याः सहैव स्थास्यति। शिशुनिकेतनस्य तुलनायां गृहे तस्य स्थितिः सर्वेषामेव कृते सुखदा श्रेयस्करी च भविष्यति। अत्र सेविका तस्य रक्षणे सदैव सावधाना स्थास्यति। मुम्बईमहाविद्यालयस्य प्राध्यापिकाया भवत्याः सूज्या अतिथिगृहे निवासस्तु न पुनः शोभाप्रदः।

हसन्त्यरुणावदत् - एवम्पुनः कथमहमनृणा भविष्यामि। ऋणं तु अधिकमेव पुष्कलीभविष्यति। पूर्वमेव अत्रभवतामनुग्रहातिरेकेणाभिभूतास्मि।

आर्ये, नैवं तर्कयतु भवती। मम सचिवरूपेण भवती मम कार्यालयं द्रक्ष्यति। नैष अनुग्रहः। एतत्सर्वं तस्य पारिश्रमिकरूपेण गृह्णातु। सचिवरूपेण भवत्या मार्गदर्शने कार्यं कुर्वन्नहमवश्यमेव मन्त्रिपदं प्राप्स्यामि, एतदहं निश्चितं जानामि। मुम्बईमहाविद्यालये प्राध्यापिकारूपेण मदीये कार्यालये च सचिव रूपेण यौगपद्येन अकालक्षेपेण च कार्यभारं गृह्णातु भवती। आदेशात्मकरूपेण विनम्रतया सादरं सस्नेहं च कौण्डकरोऽवदत्।

महाविद्यालयस्य प्राध्यापिकापदे नियुक्तिस्तु अरुणायाः स्वप्न आसीत्। कस्यापि राजनीतिज्ञस्य अवश्यम्भवितव्यस्य कस्यचिन्मन्त्रिणो वा सचिवरूपेण नियुक्तिस्तु न कदापि तस्या मनःकल्पनीयमासीत्। किञ्चित्कालं यावत्सा मन्त्रिणः कौण्डकरस्य सचिवरूपेण सम्पूर्णं प्रदेशं सङ्केतेन प्रचालयन्तीमात्मानम् अकल्पयत्।

अत्रान्तरे कौण्डकरमहोदयः सस्नेहं सोत्साहञ्चावदत् - श्व एवाहं सेवकान् प्रैषयिष्यामि। ते भवत्याः सर्वं परिच्छदमत्रानेष्यन्ति। अहमात्मनोऽन्तश्चक्षुषा अत्रभवत्यां यां प्रतिभां पश्यामि न ताम् आर्या जानाति।

आदरणीयोऽत्रभवान्, कनिष्ठां मां मध्यमपुरुषेणैवाकारयतु। एवं सादरं सस्नेहञ्च कथयन्ती अरुणा कौण्डकरमहोदयस्य प्रस्तावमन्वमन्यत।

**इति द्वितीय उच्छ्वासः**

## अथ तृतीय उच्छ्वासः

कौण्डकरगृहस्योपगृहमागत्यारुणा मुम्बईमहानगर्यां प्रथमवारं गृहसदृशं निवासस्थानमाप्नोत्। तस्यैव कृपया एका सेविका गृहस्य सर्वाण्येव कार्याणि सम्पादयितुम् अथच अरुणायाः करुणस्य च विशेषतः परिचर्यार्थं स्थायिरूपेण तत्रावसत्। महाविद्यालयेऽध्यापनकार्यानन्तरं कौण्डकरमहोदयस्य निर्वाचन क्षेत्रस्य समस्यानामध्ययनं, दैनन्दिनः पत्रव्यवहारो, विशिष्टानां नागरिकाणां कौण्डकरमहोदयेन सह समागमार्थं विनियोजनव्यवस्था चारुणायाः प्रमुखानि कार्याण्यासन्।

निरन्तरं कार्यव्यापृताया अरुणाया दिनचर्या अत्यधिकमायासजनिकासीत्। महाविद्यालयेऽध्यापनार्थं स्वाध्यायोऽपि तस्या दैनन्दिनेषु कार्येषु सम्मिलित आसीत्। दिनान्ते कार्यालये कौण्डकरमहोदयेन सह विभिन्नविषयेषु विमर्शोऽपि दैनिकी प्रक्रियासीत्।

यदाकदा अरुणाया रमणीयेन सौन्दर्येणासेचनकेन च यौवनेन मुग्धः कौण्डकरमहोदय उन्मुक्तभावेन तां प्राशंसत्, परं लक्ष्मणरेखाया ज्ञानं सदैव तं संयतं विनिगृहीतं चारक्षत्। यद्यपि विचक्षणाया मनीषिण्याश्चारुणायाः कौण्डकरस्य विचेष्टितानि सहजसंवेद्यान्येवासन् तथापि तेनानुगृहीता उपकारबद्धा च सा बोधपूर्वं सर्वमेतत्पर्यहरत्।

कौण्डकरो महाराष्ट्रस्य मध्यवर्गीयात् कुटुम्बादागत एकः सशक्तो राजनेता आसीत्। सामान्य आपणिकस्तस्य पिता तं प्रशासनिकसेवायाः प्रतियोगिता परीक्षामुत्तीर्य उच्चाधिकारिरूपेणासनस्थमदिदृक्षत। पित्रा प्रोत्साहितः कुशाग्रबुद्धिः राजीवकौण्डकरोऽध्ययने सदैवाग्रणीरतिष्ठत्। छात्रजीवने एव राजीवकौण्डकरः अवागच्छत् यत् भारतस्य लोकतन्त्रव्यवस्थायां राजनीतिज्ञानां गौरवं सर्वाधिकं वर्तते। उच्चाधिकारिणस्तु सेवका इवताननुवर्तन्ते। एतदवगत्य स राजनीतिक्षेत्रमेव स्वजीवनस्य मार्गरूपेणाचिनुत, प्रमादव्यतिरेकेण च

सयत्नमस्मिन्क्षेत्रे पादन्यासम् अकरोत्। विश्वविद्यालये विद्यार्थिपरिषदो ऽध्यक्षरूपेण निर्वाचितो भूत्वा विद्यार्थिजीवने एव स स्वकीयं राजनीतिकं जीवनमारभत। सैव कौण्डकरः अद्य विधानसभासदस्योऽस्ति। सर्वदा साध्ये एव दत्तावधानः साधननिरपेक्षः कौण्डकरः प्रतिद्वन्द्विनोऽतिशय्य लोकप्रियो नेता अस्ति। करुणा, सहानुभूतिः, सद्भावना, एतादृशा भावा राजनीतिक्षेत्रे निरर्थका भवन्ति इति सिद्धान्तमाश्रित्य सोऽपराधिजगतः सदस्यैः सह सम्बन्धानामौचित्यं प्रतिपादयति। अपराधिजगतो गणाधिपतिस्तस्य मित्रमस्ति। स हि कौण्डकरस्य राजनीतिकानाम् उद्देश्यानां पूर्त्यै तस्य सेवायां सदैव तत्परस्तिष्ठति। जनता तं भाविमुख्यमन्त्रिरूपेण स्थितं पश्यति। शोभना रूपवती मनोरमा च पत्नी, महाविद्यालयस्य छात्रा स्मिता नाम्नी पुत्री, विद्यालयस्य छात्रः सुधीरनामकश्च पुत्रः कौण्डकरस्य सुखी कुटुम्बोऽस्ति।

अदृष्टापराधाया निर्व्यलीकायास्तस्या लम्पटेन प्रमोदेन सह अहैतुकस्य प्रेम्णः परिणामो द्विवर्षदेशीयः करुणोऽरुणायाः चिन्तनकेन्द्रमासीत्। सवात्सल्यं तेन सहालपन्ती सा आगर्भाधानात् तस्य जन्मपर्यन्तं तत्पश्चाच्च अद्यावधि घटिता घटनाः स्मारं स्मारं ध्याननिष्ठातिष्ठत्। व्यावहारिकरूपेण राजनीतिक्षेत्रे अनायासं प्रविष्टारुणाद्य सामान्या नारी नास्ति। भाविनिर्वाचनानन्तरं यदि कौण्डकरमहोदयो मन्त्रिपदासीनो भवति, तस्य सचिवरूपेणारुणायाः स्थितिस्तु भिन्ना एव भविष्यति। करुणस्य विद्यालयप्रवेशावसरे तस्य पितुः किं नामेति प्रश्ने समुपस्थिते तस्याः स्थितिः कीदृशी भविष्यति। सत्योद्घाटने तु अवस्थाया वैषम्यं चिन्तनीयं भविष्यति। अधुना तु विधवारूपेणैव तां सर्वे जानन्ति, एवं च सर्वे एव तामाद्रियन्ते। सा अविवाहिता मातास्तीति रहस्योद्घाटने कौण्डकरस्य व्यवहारेऽपि परिवर्तनस्य सम्भावना वर्तते, तस्या यौनशोषणस्य सम्भावनापि निरसितुं न शक्यते। एवं चिन्ताकुलायास्तस्याः कल्पनासु पित्रोः कुटुम्बस्य च व्यवहारः चलचित्रमिव प्रतिबिम्बितोऽभवत्। विगतवर्षद्वय कालावधौ कुटुम्बिनो नैकवारमपि तामन्वेष्टुं प्रायतन्त। तस्याः कुशलक्षेमविषये न ते किमपि जानन्ति। येन सह जीवनस्य सङ्कल्प आसीत् वञ्चकेन तेन प्रमोदेन प्रतारिता सापि न कदापि पित्रोः कुटुम्बस्य कुशलक्षेमविषये ज्ञातुं प्रायतत।

अधुना विदुषी प्रतिभासम्पन्ना महाविद्यालयस्य प्राध्यापिका च सा कौण्डकरमहोदयस्य सचिवरूपेण राजनीतिक्षेत्रं प्रविश्यात्मनः कृते मुम्बई महानगर्यां विशिष्टं सम्मानितञ्च स्थानं समकल्पयत्। तनयः करुणस्तु तस्य जीवितमेवास्ति। तस्य जन्मविषये रहस्योद्‌घाटने सति जनास्तमधर्मजम् अनभिजातञ्च कथयिष्यन्तीति चिन्तापरम्पराकुला अरुणा अनायासमेव निद्रादेव्या उत्सङ्गेऽशेत।

परिस्थितिजन्येन वैवश्येन विपरीतास्ववस्थासु पतितारुणा कौण्डकरस्य संसर्गं प्राप्य शनैः शनैः निरवशेषं परिवर्तितासीत्। अप्रतिमसौन्दर्यसम्पन्ना निपुणमतिः दक्षा विचक्षणा च सा साम्प्रतम् प्रबलतमानपि, पटुतमानपि, सुप्रयोगवतोऽपि च राजनीतिज्ञान् अभिभवितुमक्षमत। तस्या वक्रदृष्टिः सुदृढमपि अत्युग्रमपि विरोधिनं भापयितुमक्षमत। कदा कथं च विपक्षिणः प्रहर्तव्या इति सर्वाधिकं सा जानाति। अपराधिजगतो गणाधिपतयोऽपि सङ्केतमात्रेण तस्या आज्ञाम् अनुपालयन्ति। महाविद्यालयस्य प्रधानाचार्यस्तामेव सर्वशक्तिमतीं मन्यते। नागरिकाः सर्वविधानि कार्याणि कारयितुं तस्या एव पार्श्वमागच्छन्ति। कौण्डकरमहोदयस्य सकलाः शक्तयस्तस्या एव पार्श्वे सन्ति इति सामान्यो जनविश्वासः।

महिलात्राणसंस्थाया वार्षिकोत्सवे विधानसभासदस्यो लोकप्रियो नेता राजीवकौण्डकरमहोदयः अध्यक्षासने स्थित आसीत्। अरुणा तस्य पार्श्वस्था आसीत्। कणिकाबेनमहोदया, सचिवपदमलङ्कुर्वती सञ्जना, मुम्बईमहानगर्याः प्रसिद्धः समाजसेवी श्रेष्ठी भोगीलालशाहमहोदयश्च मञ्चस्था आसन्। विविधानां सांस्कृतिककार्यक्रमाणां प्रस्तुतेरनन्तरमरुणा स्ववक्तव्यमारभत -

अध्यक्षाः श्रीकौण्डकरमहाभागा, आदरणीयाः श्रेष्ठिनः श्री शाहमहोदया, उपस्थिताः सर्वे भ्रातरो भगिन्यश्च, सम्माननीया आयोजका अतिथयश्च, अद्यास्मिन् महिलात्राणसंस्थाया वार्षिके समागमेऽत्रभवतः सर्वानपि स्वागत व्याहृत्या अभिनन्दयामि।

महिलात्राणसंस्था गतेभ्य एकादशवर्षेभ्यो महिलावर्गस्य कल्याणे संलग्ना वर्तते। महतीयं विडम्बना यत् नारी पुरुषं जनयति, स्ववक्षोजयोर्दुग्धं पाययित्वा तं पोषयति, तस्या उत्सङ्गे एव सर्वे चलनं, धावनं, भाषाप्रयोगञ्च शिक्षन्ते,

परं तयैव पालितः पोषितोऽभिवर्धितश्च पुरुषः अकृतज्ञतया, कृतघ्नतया च हिंस्रः पशुरिव निष्काममुपकारिणीमपांशुलां तामेव स्वभक्ष्यं करोति। पुरुषाणां पुरुषप्रधानस्य समाजस्य च अत्याचारैः पीडितानां महिलानां संरक्षणमेवास्याः संस्थायाः प्रमुखमुद्देश्यमस्ति।

संसारस्योत्पत्तिक्रमं सञ्चालयितुं परमेश्वरेण नारीणां पुरुषाणाञ्च शरीररचनायां भिन्नता प्रतिपादिता, विना नारीं नैकपदमपि पुरुषो गन्तुं क्षमते। परस्परं सहयोगेनैव संसारे उभयोः सार्थकता वर्तते। परं शारीरिकं बलमाश्रित्य नारीणाञ्च विमलात्मताया लाभं मन्यमानः पुरुष. ताभिः सह अन्यायपूर्वकम् अत्याचारपूर्णं व्यवहरति। शरीररचनाभेदं परित्यज्य सर्वेषु क्षेत्रेषु अद्य नारी पुरुषेण सह अग्रे गच्छति। विश्वविद्यालयानां परीक्षापरिणामेषु योग्यतासूचीषु नारीणां संख्या पुरुषेभ्यो न्यूनतरा नास्ति, कलाक्षेत्रे, विज्ञानक्षेत्रे, चिकित्साक्षेत्रे, गृहनिर्माणशिल्पे, यन्त्रनिर्माणशिल्पे, किम्पुनः कारादियानानां वायुयानानामपि सञ्चालने सेनायाञ्च अद्य नारी सामान्येन पुरुषैः सह अग्रतरं धावति। प्रशासनिकसेवासु अनेका महिला अतिविशिष्टां सिद्धार्थतां प्रादर्शयन्। श्रीमती इन्दिरागांधीमहोदया प्रधानमन्त्रिरूपेण न केवलं भारतवर्षम् अशात्, अपितु एकसप्ततितमे वर्षे युद्धावसरे शत्रुदेशमेवं पाठमपाठयत् यथा ततः प्रभृति भारतं विश्वशक्तिरूपेण गण्यते। प्रतिभापाटिलमहोदया भारतवर्षस्य महामहिम शालिनी राष्ट्राध्यक्षा वर्तते। एवं हि सर्वेष्वपि क्षेत्रेषु अग्रे धावन्त्यपि नारी, अद्यापि शोषिता, प्रवञ्चिता, विप्रलब्धा, छलिता, अतिसंहिता, पादमर्दिता च दरीदृश्यते। अद्यापि पुरुषः नारीणां सौन्दर्यं, तासां यौवनं भोक्तुमिच्छतिं, भुक्त्वा च उच्छिष्टमिव, अवशिष्टांशमिव कृत्वा परित्यजति। अद्यापि पुरुषस्य कृते नारी भोग्यं वस्तु इव, चेतनाशून्यपदार्थ इव, मनोरञ्जनस्य साधनमात्रमिव, विषय इव, प्रकरणमिव, अधिकरणमिव वर्तते। समाजेन पुरुषैश्च शोषितानाम् एवंविधानां महिलानां संरक्षणार्थमेव वर्तते एषा महिलात्राणसंस्था।

संवेदनहीनः पुरुषो नारीणां हृदयं, तासां मनोभावान्, तासां बोधं, चेतनां, चित्तरागं च न गणयंति। केवलं सुगन्धितं पुष्पमिव आघ्राय मुञ्चति, प्रक्षिपति च। नास्ति नारी पदार्थो, न चापि सा पदार्थ इव भोग्यास्ति। शिक्षिता, प्रतिभा सम्पन्ना, चेतनायुक्ता, रागान्वितापि, रसमयी अपि बुद्धिसङ्कल्पयुक्ता नारी

नास्ति पुरुषस्य दासीमात्रम्। पुरुषस्य व्यवहारेण विक्षुब्धा, आकुलचित्ता सा निस्सङ्कोचभावेन दृढतया च स्वकीयं विरोधमभिव्यनक्ति। महिलात्राण संस्थामाश्रित्य पुरुषस्य जननी नारी पुरुषं नारीभिः सह कथं व्यवहर्तव्यमिति शिक्षयितुमिच्छति।

पुरुषाणामधिकाराणामपहरणं नास्ति अस्माकीनमुद्देश्यम्। समाजे जीवने च नारीणां पुरुषाणां च कर्तव्यानि सुनिश्चितानि। यदि पुरुषाणां कार्यं नारी कर्तुं न पारयति तर्हि सन्त्यनेकानि कार्याणि यत्र नारीणां सामर्थ्यं निर्विवादम्। नोभयोः क्वचिदपि प्रतिद्वन्द्विता। स्त्रीणां पुरुषाणां च मध्ये पारस्परिकसम्मान पूर्वकं समभावेन व्यवहार एव सर्वासां समस्यानां परिहारो वर्तते।

करतलध्वनिपूर्वकं साधुवादैः श्रोतृभिः अरुणायाः कथनं समर्थितम्। अरुणा च स्ववक्तव्यं निरन्तरमरक्षत् - अधिकाराणां कर्तव्यानां च परस्परं सापेक्षता निर्विवादमस्ति। यदि पुरुषः स्वहृदये नार्युपरि अधिकारभावनां रक्षति तर्हि पुत्रीरूपे, भगिनीरूपे, पत्नीरूपे, मातृरूपे च तस्याः सरंक्षणं पुरुषस्य कर्तव्यक्षेत्रं स्वीकर्तव्यम्। यद्येवं भवेत् तदा नारीः प्रति अत्याचारस्य प्रश्न एव नोत्पद्यते। निश्चितरूपेण बलात्कारसदृशीनां घटनानां सम्भावनापि न स्थास्यति। एतादृशी स्थितिस्तु समाजे न दृश्यते। अत एव नारीषु आत्मविश्वासमुत्पाद्य तासां व्यक्तित्वस्य सर्वाङ्गीणो विकास एव महिलात्राणसंस्थाया उद्देश्यम्। शरीरेण तन्वङ्गी अपि नारी वस्तुतो नास्त्यबला, निःसत्त्वा, निस्तेजा वा। क्षीणसत्त्वा नारी सशक्तस्य समाजस्य निर्माणं कथं करिष्यति ? नारीणां मार्दवं, तासां त्यागभावः, तासां निःस्वार्थता, तासां वात्सल्यं, तासां सहिष्णुता नास्ति तासां दौर्बल्यं सत्त्वहीनता वा। कमलकोमला सरलहृदया च नारी यदि विद्रोहिणी भवति तदा तस्याः करालं कालीरूपं अप्रतिकार्यं, दुर्निवारं, दुर्निग्रहम् अनतिक्रमणीयम् अबाधनीयञ्च भवति। सतीत्वं, पातिव्रत्यं, मातृत्वं च नारीणां बहुमूल्या सम्पत्। एतानि जीवनमूल्यानि नारीणां शृङ्गारः। परं विकसितेऽस्मिन् युगे नारीणामवमूल्याङ्कनं तु अक्षम्योऽपराधः। नारीणामस्मिता तु सुदृढं रक्षणीया। एतदर्थमद्याहं सर्वानेव भवत आह्वयामि।

सौभाग्यमेतन्महिलात्राणसंस्थाया यदस्माकं प्रियो राजीवकौण्डकरमहोदय सदृशः सुदृढो नेता स्वकीयं सशक्तं संरक्षणं प्रदातुमद्यात्रास्माकं मध्ये विराजते।

श्रेष्ठिनां श्रीभोगीलालशाहमहोदयसदृशानां समाजसेविनां बलेनैवास्माकं महिलात्राणसंस्था जीवति। अत्रभवतां सर्वेषां कृते हर्षस्यायं विषयो यत् श्रीशाहमहोदयो महिलात्राणसंस्थाया आर्थिकसुदृढतायै लक्षद्वयं रूप्यकाणि अयच्छत्। प्रासङ्गिकमेतदत्र विनिवेदनं यत् श्रीशाहमहोदय उक्तं राशिं सम्प्रत्येव मह्यं समार्पयत। उभावपि मञ्चस्थौ महानुभावौ पुरुषसमाजस्य गौरवम्। यदि पुरुषा अनयोः महापुरुषयोः पदचिह्नान्यनुयान्ति तदा स्वस्थस्य आदर्शस्य च समाजस्य विकासोऽनायासमेव भविष्यति। अरुणाया एषा घोषणा करतलध्वनिभिः सर्वैरभिनन्दिता। अरुणा च एतदुक्त्वा तूष्णीमभूत्।

तस्मिन् समागमे अरुणाया वक्तव्येन न केवलं महिलात्राणसंस्थाया गुरुत्वं प्रत्युत कौण्डकरमहोदयस्य राजनीतिकं महत्त्वमप्यतिशयेनावर्धत। अरुणायाः प्रशंसया स नारीणामानुकूल्यमवाप्नोत्, एवं समाजे तस्याधारो दृढतरोऽभवत्। सामान्यजनतायां, महिलात्राणसंस्थायां, श्रीशाहमहोदयसदृशानां विशिष्ट नागरिकाणां मध्ये, विशेषतः कौण्डकरस्य विचारदृष्ट्या च अरुणा निश्चितरूपेण महाप्रभावा अतिशयेन च प्रतिष्ठिताभवत्।

सन्ध्यासमये कार्यालये आलपन् कौण्डकरोऽवदत् – आर्येऽरुणे, अद्य प्रथमवारं मया अत्रभवत्या भाषणं श्रुतम्। भवती अत्यन्तमुत्कृष्टा सभावक्त्री। भवत्या वाक्कौशलं तु दीर्घानुभववतो दिग्गजान् पुरोगामिनो मार्गदर्शकान् अप्यतिशेते। कौण्डकरस्य व्यवहारे सफलताजनिता मादकता प्रत्यक्षमलक्ष्यत। स्मितं विक्षिपतस्तस्य आरक्तयोर्नयनयोः विलासपूर्णो व्यवहारः स्पष्टमेव तस्य मनोभावान् अपावृणोत्। अरुणा एकं लेख्यपत्रं तस्य समक्षं स्थापयन्त्यवदत् – अतिमहत्त्वपूर्णमेतत्पत्रमत्रभवतां ध्यानमपेक्षते। एतद्दृष्ट्वा सोऽवदत् – त्यजैतत्सर्वम्। अद्यैको विचारो मम मनसि उत्पद्यते। यद्येष सङ्कल्पः क्रियान्वितो भवति तदा भवत्याः साहाय्येनाहं सम्पूर्णं राज्यं नियन्तुं शक्नोमि।

राज्यस्य राजनीतिकपरिस्थितिषु नाहं किमपि परिवर्तनं लक्षयामि। कीदृशस्तावत् सङ्कल्पो येन भवानेवमुत्साहितो दृश्यते। लेख्यपत्रमपसारयन्ती अरुणा सस्मितमपृच्छत्।

कौण्डकरोऽवदत् – अद्यावधि न मया कदापि मुख्यमन्त्रिपदविषये कल्पितम्, परमद्य महिलात्राणसंस्थायाः समागमे अत्रभवत्या भाषणश्रवणा

नन्तरमेकः सङ्कल्पो मम मनसि उदपद्यत यद्भवत्या वाक्पटुताप्रभावेण राजनीति क्षेत्रेऽकल्पितपूर्वा उन्नतिः सम्भवति। आगामिसामान्यनिर्वाचनेषु मुख्यमन्त्रि पदमधुना मम लक्ष्यम्। भवत्याः प्रभावेण प्रदेशस्य जनतायाः समर्थनं प्राप्य मम स्वकीयस्य दलस्य नेतृरूपेणाभ्युदयः सम्भवति। दलनेतृपदं प्राप्य सामान्य निर्वाचनावसरे निजसमर्थकानेवावां निर्वाचनयुद्धेऽवतारयिष्यावः। भवत्या वाक्पाटवपूर्णेन प्रभविष्णुना प्रचारेण सम्पूर्णस्य प्रदेशस्य महिलावर्गः त्वां समर्थयिष्यति। निर्वाचनयुद्धेऽवतीर्णाया भवत्यास्तु विधानसभासदस्यता निर्विवादं सुनिश्चिता वर्तते। सम्पूर्णे प्रदेशे मम सचिवरूपेण दलस्य प्रचारकार्यस्य दायित्वम् अत्रभवत्या एव स्थास्यति। विश्वस्तोऽस्म्यहं यदेवं मम समर्थका विजयिनो भविष्यन्ति, अस्माकं दलञ्च निश्चितरूपेणैव स्पष्टं बहुमतं प्राप्स्यति। एवं सति अहं मुख्यमन्त्री, भवती च उपमुख्यमन्त्रिपदमलङ्करिष्यति। मिलित्वा च आवां प्रदेशस्य सम्पूर्णं परिदृश्यं परिवर्तयिष्याव इति।

क्वाहमकिञ्चना नवा चास्यां महानगर्यां, क्व च विधानसभासदस्यता। मन्त्रिपदस्य स्वप्नस्तु आकाशकुसुममिवाकल्पनीयः। अत्रभवतां सचिवालये श्रीमतां परिचर्यायां समयं यापयन्त्या एव मम जीवनस्य साफल्यम्। भवतां संरक्षणे मम पुत्रः करुणः सम्भृतो भूत्वा संवर्धते, एतन्मात्रमेव मत्कृते पर्याप्तम्। पूर्वमेव भवतामुपकारैर्बद्धा कृतज्ञास्मि।

कौण्डकरोऽवदत् – अरुणे, अलमेवं वादानुवादेन। यथाहं कथयामि तथा कुरु। निर्वाचनात्पूर्वं सपादवर्षद्वयपरिमिते काले दृढं धरातलं यथा भवति तथैव कार्यं कर्तव्यम्, एवं हि विधानसभासदस्यता तु अनायासमेव प्राप्ता स्थास्यति। विधानसभायामस्माकं दलस्य स्पष्टं बहुमतार्थं, तत्रापि मम समर्थकानाञ्च बहुतरभागाय मम प्रयत्नो भविष्यति। विधानसभायामेतादृशीम् अवस्थां प्राप्य भवत्याः सहयोगेन किं सम्भवति, इति तु भवती स्वयमेव साक्षात्करिष्यति।

अहं त्वधुनापि भवदादेशानुसारमेव सर्वं करोमि, भविष्यत्कालेऽप्येवमेव भविष्यति, परं नास्ति राजनीतिः मादृशीनां महिलानां कृते। इत्येवं कथयन्ती अरुणा सङ्कोचं प्रादर्शयत्।

न भवती जानाति भवत्याः क्षमताम्। नैव हीरकः स्वकीयं महत्त्वं स्वयं

निश्चिनोति। ओजःपूर्णा भवत्या वाणी, निरन्तरं सोत्साहा अध्यवसाययुक्ता च भवत्याः कार्यशैली, गुरुप्रभावञ्च भवत्या व्यक्तित्वम्, एते सर्वे राजनीतिज्ञानाम् एव विशेषाः सन्ति। एवं कथयन् कौण्डकर उभाभ्यां करतलाभ्यामरुणाया अंसौ अभ्यगृह्णात्।

अतिशिष्टतयात्मानं विमोचयन्ती अरुणा अकथयत् – अत्यल्पायुरस्ति मम शिशुः, राजनीतिक्षेत्रे सक्रिया भूत्वा नाहं तस्य भविष्यमन्धकारमयं करिष्यामि, यतोहि तदा मम पार्श्वे पुत्रस्य परिचर्यार्थं तु काल एव न भविष्यति। मां तु पुत्रस्य पालनं पोषणं कृत्वा मातृधर्मस्य निर्वहणे एव जीवनस्य सार्थकता प्रतिभाति।

अरुणायाः श्वासावरोधकं, वाक्स्तम्भकं, सौन्दर्यसम्पत्पुष्कलञ्च यौवनरसम् आस्वादयितुं समुत्सुकोऽपि कौण्डकर आत्मानं नियमयन् अरुणामवदत् – बालकस्य चिन्तयालम्। तस्य परिचर्यार्थं तु धात्री सदैव तत्परा स्थास्यति। उन्नतिपथे अग्रे गच्छन्ती भवती तस्य पालने पोषणे शिक्षाप्रबन्धे च अधिकं सुष्ठुतया सफला भविष्यति। स हि अधुना तृतीये वर्षे, शीघ्रमेव चतुर्थे वर्षे पदार्पणं करिष्यति। अन्तेवासिनां निवासव्यवस्थायुक्ते कस्मिंश्चित् शिशुनिकेतने तस्य प्रवेशः सर्वथा श्रेयस्करो भविष्यति।

अरुणा उदतरत् – अहमपि विचिन्तयामि यत् कस्मिंश्चित् लोकविश्रुते विश्वजनीये विद्यालये करुणस्य प्रवेशार्थं प्रयासो विधेयः। श्रूयते हि अत्यन्तं कठिन एतादृशेषु विद्यालयेषु प्रवेशः। 'शिक्षाभारती' लोकविश्रुतो विद्यालयोऽस्ति। किं करुणस्य प्रवेशः तत्र सम्भवति ? एतदर्थं प्रयासस्याश्वासनं दत्त्वा कौण्डकर उत्थाय विश्रामार्थमन्तर्गृहं प्रविष्टः।

मुम्बईमहाविद्यालये अध्यापयन्त्या अरुणायाः सार्धैकवर्षमितः कालो व्यतीतः। वैदुष्यपूर्णेन तस्या अध्यापनकार्येण स्नेहपूर्णेन च व्यवहारेण विद्यार्थिनः, सहकर्मिणोऽधिकारिणश्चात्यन्तं सन्तुष्टा आसन्। कौण्डकरस्य राजनीतिकसचिवपदे आसीनाया अरुणायाः सन्तुष्टिं प्रसन्नतां च महाविद्यालयस्य प्रधानाचार्यः कौण्डकरस्यैव प्रसन्नताममन्यत। एवं कौण्डकरस्य प्रसन्नतायै प्रधानाचार्यः काणेमहोदयः अरुणाया राजनीतिशास्त्रस्य प्राध्यापकपदे अस्थायिरूपेण कृतां नियुक्तिं नियमितां कर्तुमादेशपत्रं नीत्वा स्वयं कौण्डकरस्य समीपमगच्छत्,

अरुणायाः स्थायिकरणादेशपत्रञ्च तस्मै प्रायच्छत्।

अरुणायाः स्थायिकरणादेशं दृष्ट्वा अप्रसन्न इव कौण्डकरोऽवदत्-आदेशात् पूर्वं नाहमत्रभवद्भिः विश्वासं नीतः। प्राध्यापकपदे स्थायिरूपेण नियुक्ता सा आत्मनि अधिकं विश्वस्ततया सचिवरूपेण मम कार्येषु सम्भवतः पूर्ववत् दत्तावधाना न स्यात्।

प्रधानाचार्य उदतरत् - आर्या अरुणा अत्रभवतां सचिवरूपेण कार्यं करोति। भवानेव तां महाविद्यालये न्ययोजयत्। मुम्बईमहानगर्यां निवासस्थानस्य समस्या तु अत्यधिकं विकटा, सा च भवतामेव गृहे निवसति। तस्याः पुत्रं भवतां कृपया भवत एव सेविका पालयति। भवतां कृपादृष्ट्यैव सा मुम्बईमहानगर्यां सम्मानितं स्थानं प्राप्नोत्। पुनश्च विदुषी, विदग्धा, कृतज्ञा च सा न कदापि भवद्विरुद्धमाचरिष्यति। जानाम्यहं तस्याः स्वभावम्। कृतघ्नता तस्याः संस्कारेषु न दृश्यते।

एतच्छ्रुत्वा प्रसन्नः कौण्डकरोऽवदत्। युक्तमुक्तमत्रभवता। अस्तु तावत्, त्यज्यतामयं विषयः। अथ शिक्षाभारतीविद्यालयस्य प्रधानाध्यापिका भारती देवी अत्रभवतां सम्बन्धिनी वर्तते?

प्रधानाचार्योऽवदत् - अस्तीति सत्यम्, परं कथं सा अत्रभवतां स्मृतिपथमागता ? निःस्पृहा निरपेक्षा च सा न कदापि किमपि नियमविरुद्धम् आचरति।

कौण्डकरो गम्भीरया गिरा अवदत् - अरुणायाः पुत्रस्य शिक्षाभारती विद्यालये प्रवेशस्तु कारयितव्य एव। यथाकथमपि अत्रभवता एतदर्थं प्रयासो विधेयः। पुनश्च, बालकस्य शिक्षार्थं विद्यालयप्रवेशे कीदृशो नियमातिक्रमः ?

साम्प्रतमेवारुणायाः स्थायिकरणादेशेन क्षुब्धमन्यस्मिन्नेव क्षणे तस्या एव पुत्रस्य शिक्षाभारती विद्यालये प्रवेशार्थं नियतमनियतं वा सर्वं कर्तुं तत्परं कौण्डकरं दृष्ट्वा राजनीतिज्ञानां स्वभावस्य रहस्यपूर्णतया विस्मितः प्रधानाचार्यः अवदत्-अनियतं तु एतदस्त्येव। विद्यार्थिनां प्रवेशः प्रत्येकं शिक्षासत्रस्यारम्भे भवति। इदानीं शिक्षासत्रस्य मध्ये न ते कस्यापि विद्यार्थिनः प्रवेशमनुजानन्ति। कदाचित् रिक्तस्थानस्य पूर्त्यै सत्रमध्ये प्रवेशे विधेयेऽपि पूर्वं पञ्जीकृतानां विद्यार्थिनां योग्यतासूच्याः प्रथमे स्थाने स्थितं प्रत्याशिनमेवानुजानन्ति।

अरुणायाः पुत्रस्य नाम तु न तत्र पञ्जीकृतं वर्तते। अतोऽस्य प्रवेशे नियमभङ्ग स्त्वस्त्येव। अनुशासनप्रिया दृढा सूक्ष्मदर्शिनी च भारती देवी नियमविरुद्धम् एतत्कार्यं न करिष्यति।

कौण्डकरोऽवदत् – त्यजैतत्सर्वं सिद्धान्तवादम्। गत्वा तां सुश्रीं भारतीं मद्वचसा कथय, सनियममनियमं वा, शिक्षाभारतीविद्यालयेऽरुणायाः पुत्रस्य प्रवेशमाज्ञापयतु। प्राप्तेऽवसरेऽहं तस्यै तस्या विद्यालयार्थं च तस्या इच्छानुसारं सनियममनियमं वा सर्वं करिष्यामि। छात्रावासे करुणस्य निवासस्य व्यवस्था अप्यवश्यमेव करणीया वर्तते।

सेवकः चायाल्पाहारादिकस्य शरावं फलके निधाय गतः। स्वयं चायेन चषकं पूरयित्वा प्रधानाचार्याय प्रयच्छन् कौण्डकरः सोद्देश्यया दृशा तमपश्यत्। विधानसभासदस्यस्य कौण्डकरमहोदयस्य हस्ताभ्यां पूरितं चायचषकं तस्य हस्ताद् गृहीत्वा आत्मानं गौरवान्वितमनुभवन् प्रधानाचार्यः शिक्षाभारतीविद्यालये करुणस्य प्रवेशोऽवश्यंकारणीय इत्यमन्यत।

कौण्डकरः चायपानानन्तरमुत्थाय गच्छन्तं प्रधानाचार्यं मधुरया वाचावदत् –महाविद्यालयस्य प्रबन्धसमित्या आगामिनि समागमे अत्रभवतां प्रबन्ध कौशलस्य पारितोषिकरूपेण वेतनवृद्धिद्वयस्य प्रस्तावं करिष्यामि। निश्चितमेव भवान् वेतनवृद्धिद्वयं प्राप्स्यति। कृतज्ञतां प्रदर्शयन् प्रधानाचार्यः काणेमहोदयः कौण्डकरमहोदयादनुज्ञां प्राप्य अगच्छत्।

सायंकाले अरुणाया आगमनात् पूर्वमेव कौण्डकरः कार्यालये उपस्थित आसीत्। आगतायाश्च अरुणाया अभिवादनार्थं बद्धौ कोमलौ करौ आत्मनो हस्तयोः गृहीत्वा सोत्साहं वर्धापयन् प्राध्यापकपदे तस्याः सेवायाः स्थायि करणस्य समाचारं तामकथयत्।

भावाभिभूतारुणावदत् – यत्सत्यं भवतामेवाश्रयेण मुम्बईमहानगर्यां निवसामि। आजीवनं भवतामुपकारैर्बद्धा स्थास्यामि। ईश्वरः अत्रभवते दीर्घायुः प्रयच्छतु। एवं कृतज्ञतां ज्ञापयन्ती अरुणा कौण्डकरस्य पादस्पर्शार्थं नम्राभवत्।

कौण्डकरो मध्ये एव तां अंसयोर्गृहीत्वालिङ्गनबद्धां कुर्वन् अवदत् – विदुषी, प्राध्यापिका, सर्वेषामप्यादरणीया अत्रभवती मम पादस्पर्शं कृत्वा किं मां पापभागिनं करोति!

कौण्डकरस्यालिङ्गनस्य प्रगाढतामनुभवन्ती अरुणा तस्याभिप्रायं, तस्य सङ्कल्पं, तस्याकूतं चावगम्य अवसरस्य सूक्ष्मतामनुभूय किमप्यनूच्यात्मानम् आलिङ्गनमुक्तां कर्तुं प्रायतत। कौण्डकरोऽपि अवस्थायाः श्लक्ष्णतामवगच्छन् आलिङ्गनं च शनैः शनैः शिथिलयन् अरुणां स्वभुजपाशादमुञ्चत्।

सुस्था भवन्ती अरुणावदत् – अत्रभवतां चरणस्पर्शस्तु ममाधिकारः। भवान् न केवलं मम जीवनस्य अवलम्बः, स्मिताया इव ममापि संरक्षकोऽस्ति। (स्मिता कौण्डकरस्य पुत्र्या नाम अस्ति) अतः स्मिताया इव ममापि अत्रभवन्तं प्रति आदरपूर्णा दृष्टिः वर्तते। पुत्र्या सह तुलनया अव्यवस्थितः कौण्डकरो विषयं परिवर्तयन् अवदत् – त्यज्यतामेतत्। अन्योऽप्येकः शुभसमाचारः। शिक्षाभारतीविद्यालये करुणस्य प्रवेशार्थमद्यैवाहं भवत्या महाविद्यालयस्य प्रधानाचार्यं तस्य विद्यालयस्य प्रधानाध्यापिकायाः समीपं गमनायादिशम्। प्रधानाध्यापिका सुश्री भारती तस्य सम्बन्धिनी वर्तते। येन केन प्रकारेण शिक्षाभारतीविद्यालये करुणस्य प्रवेशस्तु कारयितव्य एव। एवमुक्त्वा कौण्डकरोऽगच्छत्।

कार्यालयाद् गृहमागतारुणा वेगेनागत्य तस्याः प्रेष्ठे संसज्य रुदन्तम् आपादमस्तकं वर्षाजलेन क्लिन्नं करुणं दृष्ट्वा स्नेहेनोत्सङ्गे उदस्थापयत्। शीघ्रतया च अङ्गमार्जनवस्त्रेण तस्य शरीरं प्रोञ्छ्य शुष्कवस्त्राणि धारयित्वा मधुमिश्रितमुष्णं दुग्धं तमपाययत्।

मुम्बईमहानगर्यां कदा अकस्मात् मेघो वर्षितुमारभते कदा च निर्मले आकाशे दिवाकरः प्रकाशतेऽथवा निशायां नक्षत्राणां रमणीया शोभा मनोहरति, इति सर्वमनिश्चितम्। यदारुणा कार्यालयकक्षमगच्छत् तदाकाशो निर्मल आसीत्। अत्रान्तरे एव घनाच्छन्नं नभोऽवर्षत्, सुदिनं च दुर्दिने पर्यवर्तत। क्रीडासक्तो बालकः करुणो वर्षाजलेन समाप्लुतोऽभवत्। अधुना वस्त्रपरिवर्तनानन्तरमरुणा तमुत्सङ्गे निधाय कम्बलेन आच्छाद्य शाययितुं शयनेऽशेत। कतिचित् कालानन्तरमेव करुणो ज्वरग्रस्तोऽभवत्। उपक्रमे तु अरुणा सामान्यं शीतप्रकोपं मत्वा पैरासीटामोलबिन्दुभिः स्वस्थो भविष्यतीत्येवं मन्यमानाधिकं चिन्तापरा नासीत्। परं अर्द्धरात्रिपर्यन्तं तु ज्वरस्य तीव्रतया करुणस्यावस्था चिन्तनीया अभवत्। दुर्बलः करुणो विश्लथाङ्गः, परिम्लानो, मन्दच्छायः, अचेतन इव

पाण्डुवर्णोऽभूत्। किंकर्तव्यविमूढारुणा कौण्डकरमहोदयस्य गृहद्वारं गत्वा घण्टिकावादनानन्तरमपि निरन्तरं द्वारमताडयत्।

सेवको द्वारमुदघाटयत्। कौण्डकरमहोदयः प्रतिदिनं मदिरापानानन्तरमेव शयनार्थं गच्छति, अतो रात्रौ तस्य कक्षे सर्वेषामपि प्रवेशः प्रायः वर्जित एव भवति। परमरुणायाः स्थितिस्तु भिन्नासीत्। भीतात् सेवकादरुणाया आगमनस्य सूचनां प्राप्य कौण्डकरः स्वयं बहिरागतः। अरुणया सह तस्याः कक्षं गत्वा करुणस्य स्थितिं च दृष्ट्वा चिन्तितः कौण्डकरः चलदूरभाषेणैव अतिसुयोग्यं चिकित्सकं करुणस्योपचारार्थमाकारयत्।

चिकित्सक आगत्य करुणस्य स्वास्थ्यपरीक्षणं कृत्वा उपचारार्थं कतिपयानि औषधानि आनेतुमादिशत्। कौण्डकरमहोदयेनादिष्टः सेवकः तत्कालमेव चिकित्सकेनादिष्टानि औषधानि आनयत्। चिकित्सकः फुप्फुसदाहस्याशङ्कां न्यरूपयत्। अन्येद्युः रक्तपरीक्षणानन्तरमेव रोगनिदानस्य निश्चयः सम्भव आसीत्।

सर्वाण्यपि कार्याणि त्यक्त्वारुणा करुणस्य परिचर्यायां संलग्नाभवत्। सप्ताह पर्यन्तं विविधपरीक्षणोपचारयुक्तैः चिकित्सकस्य प्रयासैः करुणः स्वस्थो ऽभवत्। अकालक्षेपं प्राप्तेन चिकित्सकस्योपचारेणैव करुणो रोगमुक्तोऽभवत्। अन्यथा अर्धरात्रौ यथा तीव्रज्वरजनिता करुणस्यावस्थासीत्, अस्यामपरिचितायां महानगर्यामेकाकिनी सात्यन्तमशक्तासीत्। कौण्डकर महोदयस्य कृपयैव एतत्सर्वमभवत्। अधुनारुणा तस्योपकारेणाधिकमेव बद्धाभवत्।

करुणः प्रतिदिनं कालस्याधिकांशं सेविकायाः संरक्षणे एवायापयत्। तस्यास्तु सम्पूर्णं दिनं महाविद्यालये कौण्डकरमहोदयस्य कार्यालये वा कार्यं कुर्वत्या एवापगच्छति। तस्याः पार्श्वे करुणस्य कृते तु काल एव नास्ति। समुचितसंरक्षणाभावे एव करुणो वृष्टावगच्छत्, रुग्णश्चाभवत्। पुनश्च, सेविकायाः सान्निध्ये करुणः किं शिक्षति, कीदृशान् वा संस्कारान् गृह्णाति, एतदपि नासीदवगतम् अरुणायाः। अद्यारुणाया मातृत्वं पराजितमिव, विवशमिव चीत्कारमकरोत्।

महाविद्यालयस्य प्राध्यापकपदात् त्यागपत्रं दत्त्वा करुणस्य समुचितरूपेण परिचर्याया विचारो व्यवहारयोग्यो नासीत्। प्राध्यापकपदे स्थायिरूपेण स्थितिरेव

तस्या जीवनस्य आधार आसीत्। आर्थिकसुदृढतायाः सामाजिकसुरक्षायाश्च आधारं प्राध्यापकपदं त्यक्त्वा तु सर्वत एव असुरक्षिता भविष्यति। कौण्डकर महोदयस्य सचिवपदस्य परित्यागोऽपि व्यावहारिको नास्ति। प्रथमतस्तु मुम्बईमहानगर्यां निवासाय गृहस्योपलब्धिरेव वर्तते एको यक्षप्रश्नः। अधुना तु कौण्डकरमहोदयस्यैव सुनिर्मिते उपगृहे विनैव व्ययं सा सुरक्षिता निवसति। कौण्डकरस्य सेविका गृहस्य सर्वाणि कार्याणि सम्पादयति। करुणस्य परिचर्याम् अपि सा एव करोति। पुनश्च, मुम्बईमहानगर्यां कौण्डकरस्य सचिवरूपेण सर्वे तस्याः सम्मानं कुर्वन्ति। सर्वे नागरिकाः, सर्वकारस्य कर्मचारिणः, अधिकारिणः, सर्वे एव तां सम्भावयन्ति। कौण्डकरमहोदयस्योपकारैर्बद्धायास्तस्या एवं सचिवपदपरित्यागोऽकृतज्ञता एव भविष्यति। न च सा कृतघ्ना। करुणस्य शिक्षायै शुभसंस्काराणां निर्बन्धेनोपदेशाय तस्य व्यक्तित्वस्य च समुचितरूपेण अभिवृद्ध्यै कस्मिंश्चिदावासीयविद्यालये तस्य प्रवेशमेव उपयुक्तममन्यतारुणा। एवं कौण्डकरमहोदयस्य प्रस्तावानुसारं करुणस्य अन्तेवासिरूपेण शिक्षाभारतीविद्यालये प्रवेशो निश्चितोऽभवत्।

प्रधानाचार्यस्य काणेमहोदयस्य प्रयासैः विधानसभासदस्यस्य भाविमन्त्रिणः शक्तिशालिराजनीतिज्ञस्य कौण्डकरस्य सम्बन्धानां प्रसन्नतायाश्च लाभालाभौ वर्णयित्वा अनुकूलतां नीता सुश्री भारती देवी शिक्षाभारतीविद्यालयेऽन्तेवासि रूपेण करुणस्य प्रवेशमन्वमन्यत।

कौण्डकरमहोदयः स्वयं निजकारयाने अरुणया सह करुणस्य प्रवेशार्थं शिक्षाभारती विद्यालयं गतः। मुख्याध्यापिका सुश्रीभारती कौण्डकरस्यागमनेन गौरवमनुभवन्ती आपूरयितुमावेदनपत्रमरुणायै अयच्छत्। आवेदनपत्रमापूरयितुम् उद्यतारुणा छात्रस्य नामस्थाने करुणस्य नामलेखनानन्तरं पितुर्नामस्थानं पठित्वा अवरुद्धा। पितुर्नामस्थाने किं लेख्यमिति तु न तया पूर्वं विचारितम्। प्रमोदस्य तु नामापि गर्हणीयममन्यत। सा विधवारूपेणैव समाजे विचरिष्यतीति तस्या दृढः सङ्कल्प आसीत्, परं कस्यचित्कल्पितनाम्नः पुरुषस्य विधवास्ति एतदपि तस्या मनः स्वीकर्तुं नाशक्नोत्। आवेदनपत्रस्य पूर्त्यवसरे एषा समस्या तस्याः समक्षमत्यन्तं दारुणा भूत्वा समुपस्थिताभवत्। एवं चिन्तासन्तानपरम्पराकुला सा प्रधानाध्यापिकामपृच्छत् - आर्ये, नास्ति अस्य पिता, किमत्र तस्य

नामोल्लेखेन! अपि मातुर्नाम्न उल्लेखः पर्याप्तः ? माता पुत्रं जनयति, तस्या एव नाम्नः प्रामाणिकता विद्यते। पितुर्नाम्नः प्रामाणिकताया आधारस्तु मातुः कथनमेव भवति, अतः प्रामाणिकतादृष्ट्या मातुर्नाम्न उल्लेख एव पर्याप्तः स्यात्।

सुश्रीभारती उदतरत् – युक्तमुक्तमत्रभवत्या। पितुर्नाम्नः प्रामाणिकता केवलं मातृसाक्ष्याधारिता भवति, परं पुरुषप्रधानेऽस्मिन् समाजे पितुर्नाम्नो महत्त्वं तु वर्तते एव। अत उचितस्थाने पितुर्नामोल्लेखं तु अवश्यमेव करोतु अत्रभवती।

विवशारुणा पितुर्नामस्थाने आङ्गलभाषायाम् ARUNA LAL इत्यलिखत्। पूरयित्वा च आवेदनपत्रं मुख्याध्यापिकायै अयच्छत्। आवेदनपत्रं पठित्वा विस्मिता सुश्रीभारती अवदत् – अत्रभवत्या पितुर्नाम्नः स्थानेऽपि स्वकीयमेव नाम लिखितम्!

अरुणाकथयत् – आर्ये, वस्तुतः करुणस्य पितुर्नाम अरुण लाल आसीत्। आङ्गलभाषायां तस्य नाम्नो वर्णविन्यास आवेदनपत्रस्य वर्णविन्यासानुरूप एवासीत्। स हि आङ्गलभाषायामेभिरेवाक्षरैः स्वहस्ताक्षरं करोति स्म। वस्तुतः स आङ्गलभाषायां शुद्धवर्णविन्यासस्य पक्षधर आसीत्। हिन्दीभाषाया अरुणशब्दस्य आङ्गलभाषायां शुद्धरूपेण अक्षरविन्यास एवमेव भवति।

एवं यथाकथञ्चिदरुणावेदनपत्रे मातुःस्थाने पितुः स्थाने च उभयत्रापि आत्मन एव नाम अलिखत्। मातृत्वं नारीणां प्रकृतिप्रदत्तः स्वाभाविको ऽधिकारः। सा कस्यचित् पुरुषस्य पत्नी भवति, न वा, अस्मिन् विकल्पे तस्याः स्वकीयो निर्णय एव अन्तिमो भवति। सामाजिकमर्यादानुसारं पुरुषः सन्तत्याः पिता भवति। पाति रक्षतीत्येवं पिता रक्षणात् भवति। यो न रक्षति, स हि कीदृशः पिता! स तु सन्तानोत्पत्तिप्रक्रियायां केवलं साधनभूतः पुरुषमात्रम्। जनयित्री अरुणा करुणस्य पालयित्री अप्यासीत्। अतः मातुः पितुश्च स्थाने उभयत्रापि सा आत्मन एव नामोल्लेखने औचित्यमपश्यत्।

अरुणा सम्पूर्णं शुल्कं कार्यालयेऽयच्छत्। करुणस्य शिक्षाभारतीविद्यालये अन्तेवासिच्छात्ररूपेण प्रवेशस्य प्रक्रिया सम्पन्नाभवत्।

गृहं प्रत्यावर्तमाना उद्विग्नमना म्लानवदनारुणा सकरुणं करुणं स्मृत्वावसन्ना आसीत्। अद्य यावत् नैकदापि करुणस्तया विना अतिष्ठत्। न तां विना स कदाप्यस्वपत्। करुणस्य जन्मत आरभ्य न सापि कदाप्येकाकिनी अतिष्ठत्।

अधुना तया विरहितः करुणः शिक्षाभारतीच्छात्रावासे स्थास्यति। जानाति हि सा यत् करुणस्य कल्याणाय, तस्य समुचितविकासार्थं शिक्षाभारतीविद्यालये, छात्रावासे च तस्य प्रवेशोऽपरिहार्यः। पुनरपि मातापुत्रयोः वियोगस्य पीडा तु नितरां स्वाभाविकी वर्तते।

अधुना निर्वाचनावसरेऽरुणा सम्पूर्णतया, एकाग्रतया च प्रचारकार्ये संलग्ना भविष्यतीति चिन्तयन् कारयाने पार्श्वस्थः कौण्डकरः प्रसन्न आसीत्। अतः परमरुणायाः सान्निध्यं स निर्बाधं प्राप्स्यति, एकान्ते तया सह वार्तालापस्य, यथासम्भवं मनोविनोदस्य चावसरं प्राप्य तस्या हृदयं विनिवेष्टुं प्रयसिष्यतीति तस्यावचेतने मनसि अन्तर्हिता मधुरा कल्पनापि तमाह्लादयत्। सत्यवसरे तस्यान्तःस्थितं पशुमपि सम्भवतः सन्तोषयितुं क्षमते इति विभावनापि तम् अपुलकयत्।

महाराष्ट्रराज्यस्य जनजीवने राजनीत्याञ्च कौण्डकरमहोदयस्य स्थानं, तस्य प्रभावञ्च बलवत्तरं कर्तुम् अरुणया योजनानुरूपं प्रयासा आरब्धाः। आगामिनिर्वाचनेषु तेषां दलस्य केन्द्रसमितिः कौण्डकरमहोदयस्य नाम भावि मुख्यमन्त्रिरूपेण प्रजासु प्रचारयेदिति हेतोः आक्रामकरूपेण दलस्योपलब्धीनां प्रचारं आवश्यकं निरूप्य अरुणा कौण्डकरमेतदर्थं प्रैरयत्। उपस्थिते हि अवसरे जनसभाभिरन्यैश्च विविधैरुपायैरात्मनो वर्चस्ववृद्ध्यै आवश्यकस्य धनस्य आपूर्त्यर्थमुपाया अपि अरुणया उपन्यस्ताः। कौण्डकरस्य प्रचारकार्यं प्रजासु तस्य प्रभावं चावेक्ष्यावश्यमेव उच्चपदस्था दलस्य धुरंधरा नेतारः तमेव मुख्यमन्त्रिरूपेण प्रस्थापयिष्यन्ति, अथच निर्वाचनेषु प्रत्याशिनां चयनस्य दायित्वमपि तस्मिन्नेव निक्षेप्स्यन्ति। एवं सति अतिविश्वस्तान् सहयोगिनो निर्वाचनेषु अवतार्य तांश्च विजयिनो विधाय मुख्यमन्त्रिपदस्योपलब्धेः योजना अरुणया कौण्डकरमहोदयस्य समक्षमुपन्यस्ता।

एकवारं मुख्यमन्त्रिपदस्य प्रत्याशिरूपेण अत्रभवतां नाम्नि सम्मुखमागते द्रष्टव्यं भवतां सचिवरूपेणारुणाया अद्भुतं कर्म। मुख्यमन्त्रिरूपेण अत्रभवतां शपथग्रहणानन्तरं मन्त्रिमण्डलस्य च गठनानन्तरमेव शान्ता स्थास्यामि, इत्युक्त्वा अरुणा तूष्णीमभूत्।

कौण्डकरस्तु श्रुत्वा किमप्यनुक्त्वैव विमोहित इव निर्निमेषं पश्यन् स्थितः।

अरुणा पुनरवदत् – न भवद्भिः धनस्य चिन्ता करणीया। अस्माकमेव दलस्य शासनं वर्तते। उद्योगपतयः श्रेष्ठिन आकार्य दलकोषाय धनस्यापूर्तिः सम्भवति। केन्द्रीयनेतृभिरत्रभवतां नाम्नि मुख्यमन्त्रिरूपेण प्रस्तुते सर्वं सुष्ठु भविष्यति। करुणस्य अनुपस्थितौ अहमपि अत्रभवतां कार्यार्थं स्वतन्त्रास्मि, इति कथयन्त्या अरुणायाः स्वरः स्तम्भमुक्तैः वाष्पैरार्द्रतां गतः।

करुणं शिक्षाभारतीविद्यालये छात्रावासे प्रवेश्य गृहमागतारुणा रात्रौ तं स्मारं स्मारं व्याकुलचित्ता, विमोहिता, कातरा, भ्रान्तहृदया च अस्थात्। प्रातःकाले करुणं द्रष्टुमधीरा सा महाविद्यालयात् पूर्वं शिक्षाभारतीविद्यालयं गता। धात्री दुग्धमल्पाहारञ्च चमसेन करुणस्य मुखे समाक्षिपन्ती स्नेहेन तस्य शिरसि करतलं निधाय तेन आलपन्ती तस्य परिचर्यायां मग्नासीत्। करुणश्च नात्यधिकं प्रसन्नोऽपि तया सह बालसुलभे वार्तालापे मग्न आसीत्, परमागतामरुणां दृष्ट्वा सर्वं परित्यज्य रुदन् स धावित्वा तस्या अङ्कं समाविष्टः। अरुणापि चिरवियोगानन्तरं दृष्टमिव तं दृढमाश्लिष्य पौनःपुन्येनाचुम्बीत्।

भावविह्वलारुणा आत्मानं सन्तोषयन्तीव करुणमकथयत्–अधीतविद्यः बहुश्रुतस्त्वं विचक्षणो भूत्वा उच्चाधिकारी भविष्यसि। अध्ययनसम्पत्ति सम्पन्नस्त्वं स्वमातुः गर्वहेतुर्भविष्यसि। अत्र विद्यालये विदुष्यः स्नेहशीलाः सुरूपाश्च तव मातृषदृश्यः अध्यापिकाः त्वां पाठयित्वा योग्यं युवानं विधास्यन्ति। वात्सल्यपूर्णाः करुणार्द्रा अनुरागवत्य आनन्दिन्यश्चैता एव तव सर्वाण्यपि कार्याणि सम्पादयिष्यन्ति। परिश्रमेण एकाग्रतया च अध्ययने रमस्व। एवं यथाकथञ्चित् करुणमात्मानञ्चाश्वास्य विलपन्तमेव तं धात्र्या अङ्के समर्प्यात्मानञ्च काठिन्येन तस्मान्मोचयित्वा शिक्षाभारतीविद्यालयतो निष्क्रम्य सजलनयनारुणा स्वमहाविद्यालयमगच्छत्। महाविद्यालयेऽपि विपर्यस्ता इव सा करुणं स्मरन्त्येव कालमयापयत्।

सायंकाले कौण्डकरस्य कार्यालयेऽरुणाया नयनयोररुणिमा तस्या मनसो वैकल्यमसूचयत्। परिश्रान्ता इव, अवसन्ना इव, ग्लाना इव सा कौण्डकरम् आगतं दृष्ट्वा तेजोहीनया गिरा तमभ्यनन्दयत्। परिम्लानमुखीं तां दृष्ट्वैव तस्या मनःस्थितिमवगम्य तां सान्त्वयितुं प्रवृत्ते हि कौण्डकरेऽकस्मादनियन्त्रिताश्रु प्रवाहारुणा सगद्गदमरोदीत्। सुस्थिरां कर्तुं तामनुनयन्निव, आश्वासयन्निव, आराधयन्निव कौण्डकरो मधुरया गिरावदत् – नैवमात्मानं क्लेशय।

बालकानामभ्युदयाय जनयितारो जनयित्र्यश्च सदैव तेषां वियोगदुःखं सहन्ते। अध्ययनार्थं गुरोराश्रमं गते श्रीकृष्णे देवकीवासुदेवौ अप्येवंविधं पुत्रवियोग दुःखमसहताम्। भ्रातृभिः सह विश्वामित्रेण सह वनं गते श्रीरामे दशरथस्य कौशल्यायाश्च मनःस्थितिरप्येतादृशी एवासीत्। उच्चशिक्षां प्राप्तुं सर्वेऽपि विद्यार्थिनो दूरस्थेषु महाविद्यालयेषु विश्वविद्यालयेषु वा छात्रावासिनो भूत्वैव विद्याविशिष्टाः प्रज्ञावन्तो भवन्ति। करुणस्य भविष्यं तु शिक्षाभारतीविद्यालये एव सुरक्षितं भविष्यति। तत्राधीतविद्यः सुसंस्कृतश्चैव स सम्पूर्णतया विकसितः सफलो युवा भविता। अतो नैवमात्मानं व्यथय। भवादृश्या विदुष्या एतादृशं वैकल्यं नोपपद्यते। करुणस्तु अस्मिन्नेव नगरे तव पार्श्वे एव विद्यते। यदा कदा तत्र गत्वा तेन समागमः सम्भवत्येव।

किञ्चित्कालानन्तरं प्रकृतिस्थारुणावदत् - सत्यमुक्तमत्रभवता, परं सन्तानवियोगजन्या कातरतापि स्वाभाविकी एव भवति। अद्य, श्वः, परश्वो वा सर्वं सामान्यं भविष्यति। करुणस्योन्नत्यै अपरिहार्य एष वियोगस्तु मर्षणीय एव। पुनरपि जन्मत आरभ्य यस्य वियोगो न कदाप्यनुभूतस्तस्य स्मृतिस्तु मनोवैकल्यं जनयत्येव।

एवं महाविद्यालये विदुषी प्राध्यापिकारूपेण प्रतिष्ठिताया राजनीतिक्षेत्रे च कौण्डकरमहोदयस्य सचिवरूपेण गुरुप्रभावाया अरुणायाः समाख्या अनुदिनम् अवर्धत। एकदा प्रतिदिनमागच्छतां पत्राणां प्रचयः अरुणायाः समक्षं फलके स्थित आसीत्। एकैकं पत्रं पठन्ती सा प्रत्येकमुपरि टिप्पणीं लिखित्वा अन्यत्र प्रचये अरक्षत्। एवं पत्राणि पठन्ती अरुणा एकं पत्रं पठित्वाकस्मात् ओष्ठाधरसङ्कोचपूर्वं शीशशब्दं कुर्वती अवदत् - आर्य, अतिकल्याणं, साधुवादः, पत्रं तावत् केन्द्रीय कार्यालयादस्ति। अत्रभवते निमन्त्रणमस्ति। दलस्य केन्द्रीयनेतृत्वेन विमर्शार्थमत्रभवान् दिल्लीस्थे मुख्यकार्यालये आहूतः। अधुना निश्चिततिथौ तत्र गत्वा भवता स्वतेजसः, प्रभावस्य, प्रौढसामर्थ्यस्य च प्रदर्शनमवश्यमेव करणीयम्। एष एवावसरो यदा भवान् सर्वेषां राजनीति धुरन्धराणां समक्षं शक्तिप्रदर्शनं कृत्वा मुख्यमन्त्रिपदस्य मार्गं सुरक्षितं कर्तुं क्षमः। दशदिवसानन्तरमस्त्येष समागमः। एतस्यां कालावधौ भवद्भिः सम्पूर्णराज्यस्य प्रभावशालिनां पुरोगामिनां, नागरिकाणां, व्यापारिणां, उद्योगपतीनां, धनाढ्यानां श्रेष्ठिनां, भूमिपतीनाञ्च समर्थनपत्राणि प्राप्य आत्मनः

शक्तिः साधयितव्या। चलचित्रोद्योगस्य केचन शक्तिशालिनो जना यदि भवतां समर्थनाय अग्रे आगच्छन्ति एतदपि श्रेयस्करं भविष्यति। अपराधिजगतो गणाधिपतिः एतत्सर्वं साधयितुं शक्नोति। अद्यैव तं तत्सकलसम्पादनाय अत्राकारयतु भवान्। अहं तं सर्वमवबोधयिष्यामि।

अपराधिजगतो गणाधिपतेः प्रसङ्गे समुपस्थिते आश्चर्यचकितोऽवाक् च कौण्डकरोऽरुणामपृच्छत् – अपराधिजगतो गणाधिपतेः विषये त्वं किं जानासि? कथं किमिति च सोऽस्माकं सहयोगी भविष्यति ?

ईषत् स्मितमवकिरन्ती अरुणावदत् – अलमाश्चर्येण। श्रीमन्, मुम्बई महानगर्यां अपराधिजगतो विषये सर्वे एव जानन्ति। अहमपि जानामि। अहं एतदपि सर्वं जानामि यदत्रभवतामाज्ञया गणाधिपतेः निर्देशेन च योजनानुसारम् अहमत्रभवतां पार्श्वमागता। करमरकरमहोदय एकः शुचिः निष्कपटोऽपि जनाधारहीनो निर्बलो राजनीतिज्ञोऽस्ति। तस्य पुत्र्या अपहरणे बलात्कारे च के संलिप्ताः सन्ति, कस्यादेशेनैतत्सर्वमभवत्, एतदपि सर्वमहं जानामि। न्यायाचारस्य निर्व्यलीकस्य च करमरकरस्य समर्थनात् मम अपावर्तनम् अपि गणाधिपतेः निर्देशेनाभवत्। अहमेतत्सर्वं यथार्थतः तत्त्वतश्च जानामि।

दीर्घं श्वासं परित्यजन्, विवृतमुखः कौण्डकरः अरुणाया मुखं पश्यन्नेव चिरं स्थितः। अद्य यावत् कौण्डकरस्य विचार आसीत् यदरुणा सरलतया अबोधपूर्वञ्च तस्य पार्श्वे निवसति। अद्यैतत्सर्वं स्वयमरुणाया एव मुखादवगत्य चमत्कृतो विस्मयान्वितश्च स अरुणाया विलक्षणेन चातुर्येण राजनीतिकौशलेन च हतप्रभ आसीत्। स हि अरुणायाः प्रतिभया राजनीतिक्षेत्रे च तस्या यथार्थज्ञानेनात्यन्तं प्रभावितोऽभवत्। राजनीतिक्षेत्रेऽपराधिजगतः प्रयोगः कदा कथं च विधातव्योऽस्मिन् विषयेऽपि अरुणाया दूरदृष्टिं दृष्ट्वा कौण्डकरोऽरुणाया अद्वितीयं राजनीतिसामर्थ्यमन्वमन्यत।

इति तृतीय उच्छ्वासः

## अथ चतुर्थ उच्छ्वासः

तनयं करुणं शिक्षाभारतीविद्यालयस्य छात्रावासे प्रवेश्यारुणा शनैः शनैः प्रकृतिस्थाभवत्। करुणोऽपि छात्रावासे समानवयस्कैः छात्रैः सह व्यामिश्रः परिवेशेन सामञ्जस्यम् अस्थापयत्। प्रत्येकं रविवासरेऽरुणा करुणं द्रष्टुम् आगच्छत्, तं नीत्वा तेन सह सम्पूर्णं दिवसं यापयित्वा सायंकाले रात्रिभोजनात्पूर्वं तं छात्रावासं प्रापयति स्म। एवं रविवासरः करुणस्यात्यन्तं प्रिय आसीत्।

अद्य रविवासरोऽस्ति। अरुणा करुणं द्रष्टुं छात्रावासं प्रति गमनात् पूर्वं दूरभाषेण रान्या सह सम्पर्कं साधयित्वावदत् – हंहो, अये रानि,

रानी – अये, अरुणे, कुत्रासि त्वम् ? अपि जीवसि ?

अरुणा – मम जीवनदात्री तु त्वमेवासि, अन्यथा अपराधिजगतः क्रुद्धदृष्ट्या मम रक्षायास्तु प्रश्न एव नासीत्।

रानी – प्रायः त्वया मिमिलिषामि, परं त्वं तु न कदापि स्मरसि।

अरुणा – नैवं वद, सुष्ठु स्मरामि, तदैव तु त्वां द्रष्टुमागन्तुमिच्छामि। वद, अद्य सतीशमहोदयः कुत्र वर्तते ? किमद्याहं त्वां द्रष्टुं शक्नोमि ?

रानी – निःशङ्कमागच्छ। नाद्य स गृहे वर्तते। पुनश्च, अधुना त्वां कौण्डकरस्य सचिवरूपेण सर्वे जानन्ति। का वार्ता सतीशस्य, अपराधिजगतो गणाधिपतिरपि तव समक्षमादरं प्रदर्शयन् विनम्रः स्थास्यति। अतः शङ्काया भयस्य वा कारणं नास्ति। करुणेन सह आगच्छ। करुणं द्रष्टुं पिपासितं मदीयं मनः सदा तमेव स्मरति।

अरुणा – अद्य करुणस्य भोजनं तव गृहे एव भविष्यति। मध्याह्ने आवाम् आगमिष्यावः। इति कथयित्वा दूरभाषं व्ययुनक्।

तदा गृहान्निर्गत्यारुणा क्वचिट्ट्रामयानेन, क्वचिदाटोयानेन, क्वचिच्च

पादाभ्यामेव चलन्ती सार्धदशवादनकाले शिक्षाभारतीविद्यालये करुणस्य छात्रावासं प्राप्ता। तस्याः प्रतीक्षायां स्थितः करुणो मातरं दृष्ट्वैव धावित्वा तस्या उत्सङ्गमागच्छत्। पौनःपुन्येन करुणं चुम्बन्ती वात्सल्यसुखञ्चानुभवन्ती अरुणा किञ्चित्कालं यावत् सर्वं व्यस्मरत्। छात्रावासाध्यक्षाया अनुज्ञया करुणं सार्धं नीत्वा आटोयानेन अरुणा सख्या गृहं प्राप्ता।

मुम्बईमहाविद्यालये प्राध्यापिकापदे नियुक्तिं प्राप्य, कौण्डकरस्य सचिव रूपेण कार्यग्रहणानन्तरञ्च प्रथमवारं सकरुणमागतामरुणां दृष्ट्वा रानी सोत्साहं तामभ्यनन्दयत्, करुणं चाङ्के निधाय दृढमालिङ्गन्ती वारं वारमचुम्बत्। उपालभमाना रानी अरुणामवदत् – दीर्घकालानन्तरं त्वया सखी स्मृता। मुम्बई महानगरीमागतायां त्वयि अहमन्वभवं यन्ममाप्यस्ति काचिदस्यां महानगर्यां, परं त्वं तु न कदापि पृच्छसि यत् तव सखी कीदृशी अस्ति।

भावविह्वलारुणाकथयत् – कौण्डकरस्य सचिवो, महाविद्यालये प्राध्यापिका वा, यदप्यहमस्मि तत्सर्वं त्वत्कृपयैव सम्भवमभवत्। तवैव मार्गदर्शनेन निर्बलं करमरकरं परित्यज्य सबलस्य कौण्डकरस्य संरक्षणं गता। अन्यथा मम जीवितमपि शङ्कितमासीत्। यत्सत्यमहं कृतज्ञास्मि अत्रभवत्याः सूजीमहोदयायाश्च।

रानी – कृतज्ञतावार्तां परित्यज। कथय तावदस्ति कश्चित्सन्देशः समाचारो वा तव पित्रोः ?

अरुणा – मम मातापितरौ तु न जानीतो यदहं जीवितास्मि न वा। गृहत्यागात् आरभ्याद्य यावन्न मयापि आत्मनो विषये कदापि सूचितम्। सम्भवतः परिवारजना मां मृतामेव सम्भावयेयुः अथवा कस्यचिद्गृहे तस्य स्त्रीरूपेणापि स्थितां मां मन्येरन्। भारतीये समाजे नारी आत्मनिर्भरापि सम्भवति, एतादृश्याः संकल्पनायाः सम्भावना तु क्षीणा एव वर्तते।

रानी – एतादृशी निरपेक्षता असावधानता च नोपयुक्ता। त्वं हि पित्रोः एकमात्रं सन्ततिः। यद्यन्यः कश्चित्पुत्रः पुत्री वा अभविष्यत् तदापि तयोः सन्तोषस्य सम्भावना अभविष्यत्, परमेका एव पुत्री, सापि गृहं परित्यज्य आगता, न किमपि सम्पर्कसूत्रं सूचना वा। सन्तान

वियोगजन्यं कथमेतन्महद्दुःखं सहेयाताम्। एकाकिनोस्तयोरवस्था विषयेऽपि किं त्वं कदाचिदभिध्यायसि?

अरुणा – युक्तं कथयसि त्वम्, परं किमहं करवाणि, अत्र हि कुलीना विधवा भूत्वा निवसामि। शिक्षाक्षेत्रे प्रज्ञावती प्राध्यापिकारूपेण, कौण्डकरस्य सचिवरूपेण, प्रभावशालिनी राजनीतिज्ञारूपेण च राजनीतिक्षेत्रे, मम प्रतिष्ठा मां सामान्यनारीभ्यः पृथक् करोति। एवं सार्वजनिकजीवने ख्यातिप्राप्तया मम जीवनं हि पूर्णतयानावृतं, सुप्रकाशितञ्च। परिवारेण सह सम्पर्के सति सर्वे मामविवाहितां मातरं ज्ञात्वापमन्येरन्। ये हि अद्य मामभिपूजयन्ति, मानयन्ति, सर्वदा च मम समक्षं विनम्रास्तिष्ठन्ति, रहस्योद्घाटने सति तेषां दृष्टिरेव परिवर्त्स्यते; प्रधानाचार्यः काणेमहोदयः कौण्डकरश्च सम्प्रत्यपि मम सौन्दर्यस्य यौवनस्य च प्रार्थिनौ स्तः। मामविवाहितां मातरं ज्ञात्वा तु उभावपि मां कलङ्कितां मत्वा केवलं भोग्यामेव विधास्यतः।

रानी – अरुणे, क्षमस्व, मया तु अनधिकृतमेव तव जीवने हस्तक्षेपः कृतः। परं किं करोमि, अतिस्निग्धतया मयैवमुक्तम्।

अरुणा – नैवं कथय, आत्मीयतया तव कथनं तु अत्यन्तं स्वाभाविकम्। मदीया स्थितिरेव विषमा वर्तते। शिक्षाभारतीविद्यालये प्रवेशावसरे करुणस्य पितुर्नाम्नः प्रश्ने समुपस्थिते विचित्रासीन्ममावस्था। मामापन्नसत्त्वां कृत्वापि अपवाचकस्य लोलुपस्य प्रमोदस्य तु नामस्मरणेनापि मनः चेखिद्यते। निश्चितरूपेण स करुणस्य पितास्ति परं लम्पटस्याविश्वसनीयस्य तस्य नाम्नः करुणस्य पितुः स्थाने उल्लेखो भवेत्, नास्य सम्भवः। तस्य स्थाने अन्यस्य कस्यचिदपि पुरुषस्य नामोल्लेखस्य तु प्रश्न एव नास्ति।

रानी – त्वं युवतिरसि, तवरूपलावण्यं गुरुप्रभावमपि, अधिकारसम्पन्नमपि, वैभवयुक्तमपि पुरुषं कामोपहतं विधातुं क्षमम्। महाविद्यालये सगौरवं प्राध्यापिकापदमलङ्कुर्वतीं, स्थायिरूपेण प्रतिमासम् उच्चवेतनम् अर्जयन्तीं, पुनश्च राजनीतिक्षेत्रे प्रतिष्ठितां महायशस्विनीं

त्वां ससुतामपि पत्नीरूपेण स्वीकृत्यातिविशिष्टोऽपि जन आत्मानं धन्यमेव करिष्यति।

अरुणा - मन्ये, औपयिकं सङ्गतार्थं च तवाभिध्यानम्, परं कपटिनो वञ्चकस्य प्रमोदस्य विश्वासभङ्गेन परिवञ्चिताहमत्यन्तम् अवसन्नतया विवाहविषये तु न कदापि चिन्तयामि। प्रमोदम् अतिरिच्यान्यः कोऽपि जनो मया सह विवाहानन्तरमपि करुणस्य प्राकृतिकः पिता भवितुं न क्षमते। पुनश्च, करुणस्य जन्मापि अविधिकं प्रमाणितं भविष्यति। नाहं करुणमनभिजातमधर्मजं वा मन्ये। अहं तु गान्धर्वविवाहानन्तरं निष्कपटतया प्रमोदेन सह कामप्रसङ्गे प्रवृत्ताभवम्। मत्कृते करुणस्य जन्म सविधिकमेव वर्तते। अतः प्रकृत्या पुरुषसामीप्यस्य आवश्यकतामनुभवन्ती अपि नाहं विवाहं करिष्यामि, न च विवाहं विना कोऽपि पुरुषो मया सह एतादृशं सम्बन्धं स्थापयितुं शक्नोति। मत्कृते सम्बन्धानां शुचिता सर्वोपरि वर्तते। करुणस्य यौवनमाप्तस्य शिरः सदा गर्वोन्नतम् एव स्थास्यति। अहं तु एकाकिन्येव जीवनं यापयिष्यामि। दुःखदो यक्षप्रश्नस्त्वेक एव यत् करुणस्य पितुः स्थाने किं नाम भवेत्।

एवं वार्तालापे मग्ने उभे अपि भोजनालयमागते। सुकन्दकान् वितुषान् कुर्वती रानी अकथयत् - नैवं वद। उच्चमध्यवर्गीयेण केनचिद्यूना सह विवाहे तु नास्ति कोऽपि दोषः। दीर्घं विस्तृतोऽस्ति जीवनस्य पन्थाः, प्रमाथीनि इन्द्रियाणि च दुर्निग्रहाणि। उच्चशिक्षितापि, उच्चपदस्थापि, धनमर्जयन्ती अपि, राजनीतिज्ञापि, सबलापि नारी जीवने पुरुषस्य साहचर्यमपेक्षते।

रान्याः पुरुषविषयकं विचारं श्रुत्वा स्मयमानारुणा सावहेलम् अरुन्तुद वाचाब्रवीत् - कीदृशस्य पुरुषस्य साहचर्यमपेक्षते नारी ? त्वं नारी असि, अहमपि नारी अस्मि। पुरुषस्य साहचर्यं तु उभयोरपि वाञ्छितमासीत्। अहम्प्रमोदस्य कामुकताया आमिषमभवम्। भुक्त्वा वञ्चयित्वा च गतेन तेन धृतगर्भा आजीवनमेकाकिनी स्थातुमभिशप्ता। त्वम्पुनः सतीशस्य साहचर्ये कथमनुभवसि एतत्तु अव्याख्येयम्। स हि तव पाणिं गृहीत्वापि त्वां

सर्वपुरुषभोग्यां, नारीमात्रमकरोत्। कोऽत्र भविष्यति प्रात्ययिको यत् सामाजिक सुरक्षार्थं मर्यादितप्राकृतिककामतृप्त्यर्थं च यस्य साहचर्यं स्वीकरोमि न हि स प्रमोद इव स्वार्थपरो वञ्चको भविष्यति।

सतीशस्य व्यवहारेणात्यन्तं दुःखिता रानी अरुणायाः कथनं श्रुत्वा अश्रूणि विमुञ्चन्ती अवदत् – सतीशसदृशानां पुरुषपशूनां साहचर्यं तु कलङ्क एव। योग्यस्य, सच्चरित्रस्य, सुखदस्य, अनुरागवतश्च पुरुषस्य साहचर्यं तु परम सौभाग्येनैव सम्भवति।

विषयं परिवर्तयन्ती अरुणावदत् – अद्यत्वे कुत्र वर्तते सतीशमहोदयः ? कीदृशाश्च सन्ति तेषां गणस्य गतिविधयः ?

ऋजीषं अग्नौ निधाय शाकं व्यञ्जनादिना संस्कुर्वती, दर्व्या च शाकं सञ्चालयन्ती रानी अकथयत् – अद्यत्वे तेषां गणाधिपतिः अन्ये च केचन गणसदस्याः सक्रियराजनीतिक्षेत्रे पादक्षेपं चिकीर्षन्ति, अत आगामिनि निर्वाचनावसरेऽनियतकार्याणि परित्यज्य राजनेतारो भूत्वा अथवा राजनेतृजनानां समर्थनं कृत्वा आत्मानम्, आत्मनः कुकृत्यानि वा नियतानि कर्तुं सप्रयत्नाः सन्ति। गणस्य कार्यकर्तारो निर्वाचनावसरे स्वीकरणीयानां सर्वविधानामुपायानां प्रशिक्षणे लग्नाः सन्ति।

भोजनेन सह खादनीयम् अपक्वशाकादिकं कर्तयन्ती अरुणा अवदत् – यदि अपराधिजगतो गणाधिपतिः मन्त्रिपदासीनो भवितुमिच्छति तदा तस्यापि स्वामिनो राजनीतिज्ञाः किं करिष्यन्ति ? भौतिकशक्तिसम्पन्ना एते दादाजनाः किं राजनीतिमप्यवगच्छन्ति ?

शाकं संस्कृत्य कन्दौ स्थापितायां स्वेदनिकायां अभ्युषान् श्रपयन्ती रान्यवदत् – राजनीतिधुरन्धरा नेतारः अपराधिजगतः साहाय्येनैव निर्वाचनेषु विजयं प्राप्य विधानसभां लोकसभां वा प्रविश्य देशे शासनं कुर्वन्ति। इदानीमपराधिजगत एते गणाधिपा यदि स्वयं सक्रियरूपेण राजनीतिक्षेत्रे जिगमिषन्ति कः पुनस्तान् रोद्धुं क्षमते ?

इदानीं यावत् निद्रामग्नः करुणो निद्रां परित्यज्योत्थितः। अरुणा वार्तालापं परित्यज्य तमङ्के निधायाचुम्बत्, स्नानागारं नीत्वा तं लघुशङ्कानिवृत्तं चाकारयत्। अत्रान्तरे रानी सिद्धं भोजनं फलके पर्यकल्पयत्। रानी अरुणा च स्नेहातिरेकेण

उभे अपि मिलित्वा करुणं अभोजयताम्। ततः ते अपि भोजनमाश्नीताम्। भोजनानन्तरं राज्या अनुज्ञातारुणा पुनरागमनस्य प्रतिश्रवं दत्त्वा तस्या गृहान्निरयात्।

करुणं छात्रावासे परित्यज्य अरुणा कौण्डकरभवनस्य उपगृहे, स्वगृहं प्रत्यावर्तत। अकस्मात् मातरं, पितरं, पितृष्वसारं च स्मृत्वारुणा खिन्नाभवत्। पितृष्वसुरनुराधाया विमर्शं संस्मृत्य तस्या अक्ष्णोः अश्रूणि न्यपतन्। यदि तस्या विमर्शं मत्वा सा प्रमोदेन सह शारीरिकसम्बन्धेषु संयता अस्थास्यत्, तर्हि एतादृश्यामवस्थायां पतनस्य तु प्रश्न एव नाभविष्यत्। अविरलमश्रूणि परित्यजन्त्यास्तस्या मनः पूर्वं घटिताः सर्वा अपि घटनाः स्मृत्वा सुदीर्घमव्यथत। उद्विग्नमना अरुणा पत्रं लेखनीं च गृहीत्वा स्वकीयां पितृष्वसारं सम्बोध्य पत्रे सर्वमात्मवृत्तान्तमलिखत्। पत्रस्यान्ते चारुणालिखत् – अहमत्र कुलीनविधवा रूपेण शिक्षाक्षेत्रे राजनीतिक्षेत्रे च प्रतिष्ठितास्मि। भवताम् अत्रागमनेन रहस्ये उद्घाटिते सति सर्वमेव विपरीतं भविष्यति। अतः केवलं पत्रद्वारेणैव भवद्भिः कुशलक्षेमसन्देशः प्रेष्यः।

करुणम्प्रति अत्यन्तं स्नेहशीलाप्यरुणा शनैः शनैः तेन विना जीवनस्य विधिमशिक्षत। महाविद्यालयस्य परिवेशे युवतीनां छात्राणां मध्ये तस्या मनसः पीडा, तज्जनितं नैष्ठुर्यञ्च विगलितुं समारभेताम्। तस्या एकान्तक्षणेषु करुणं प्रति वात्सल्येन सहैव अवस्थावैपरीत्याद् बाधिताः प्रकृत्या कोमला यौवनभावा अपि तस्या हृदयं व्यातन्वन्। समकालमेव तस्या व्यक्तित्वे आत्मबलस्य आत्मविश्वासस्य चातिरेकेण सा आत्मानमधिकं सुरक्षितामन्वभवत्। प्रधानाचार्यः काणेमहोदयः कौण्डकरमहोदयश्चापि अरुणाया व्यवहारे व्यक्तमेतत्परिवर्तनम् अलक्षयताम्। अतस्तयोर्व्यवहारे पूर्वापेक्षया शिष्टताया आधिक्यं स्पष्टमासीत्।

कतिचिद्दिनानन्तरमेकस्मिन् दिवसे सायंसमये कौण्डकरस्य कार्यालये आगतेषु पत्रेषु पितृष्वसुरनुराधाया हस्ताक्षरैरङ्कितमेकं पत्रं दृष्ट्वा भावविह्वलारुणा अश्रूणि विमुञ्चन्ती आत्मानं नियन्तुमक्षमा तत्पत्रं झौलिकेऽस्थापयत्, कौण्डकरञ्चागच्छन्तं दृष्ट्वा मुखप्रक्षालनार्थम्प्रसाधनकक्षं प्राविशत्।

कार्यालयं प्रविष्टः कौण्डकरोऽद्य चिन्तित आसीत्। निर्वाचनायोगेन

निर्वाचनानां तिथयो निश्चिताः कृताः। राजनीतिशास्त्रे निष्णाताया अरुणाया मार्गदर्शनेऽपि यदि स लक्ष्याधिगमेऽसफलस्तिष्ठति तदा तु आजीवनं तस्य स्वप्नः स्वप्न एव स्थास्यति। प्रसाधनकक्षादागतामरुणां कौण्डकरः सर्वां स्थितिमकथयत्। मुख्यमन्त्रिपदं हस्तगतं कर्तुमिदानीं दलस्य केन्द्रीयनेतृभिः सह सम्बन्धानां वैशिष्ट्यमावश्यकमासीत्। निर्वाचनेषु कौण्डकरस्य समर्थका अधिकांशं प्रत्याशिनो भवेयुरेतदर्थमरुणया सह केन्द्रीयनेतृवराणां पार्श्वं गत्वा येनकेनाप्युपायेन स्वप्रभावस्य प्रयोग एव एकमात्रं साधनमासीत्। कौण्डकरस्य विचार आसीद् यद् अद्भुतं रमणीयमाकर्षकमासेचनकञ्चारुणायाः सौन्दर्यं, निशमनकारिणो वाग्रहितान् कर्तुं क्षमं तस्या वाक्पाटवं, राजनीतिशास्त्रस्य च विस्तृतं ज्ञानम्, एवंविधगुणसम्पन्ना विशिष्टा व्यक्तिररुणा दलस्य केन्द्रीयं नेतृत्वमपि प्रभावयितुम्, प्रेरयितुञ्च क्षमा। एवं निर्णयं कृत्वा कौण्डकरो दूरभाषेण केन्द्रीयकार्यालयेन सम्पर्कं साधयित्वा, समागमस्य तिथिं निश्चित्य राजधानी एक्सप्रैसरेलयानस्य शयनपरिच्छेदस्य द्वे यात्रापत्रे आरक्षिते अकरोत्।

परस्मिन् दिवसे प्रतिदिनमागच्छतां पत्राणां प्रचयात् एकैकं पत्रं गृहीत्वा, पठित्वा, तेषामुपरि च यथावश्यकं टिप्पणीं लिखित्वा अन्यत्र प्रचये स्थापयन्ती अरुणा एकं पत्रं दृष्ट्वा पठित्वा च विचारमग्नाभवत्। पत्रे प्रेषकेण राज्यसर्वकारस्य लोकनिर्माणविभागस्य अधमाचारस्य अकीर्तिकरा कथा लिखिता आसीत्। प्रदेशस्य मुख्यमन्त्रिणः, लोकनिर्माणविभागस्य मन्त्रिणः, केषाञ्चिदन्येषाञ्च विधायकानां नामोल्लेखपूर्वकं सप्रमाणञ्च भ्रष्टाचरणस्य अकाट्यतर्कयुक्ता विस्तृता कथा आसीत्। भ्रष्टाचरणस्य अस्मिन् प्रकरणे सम्बन्धितैः राजनीतिज्ञैः अधिकारिभिश्च मिलित्वा राजकोषस्य विशालो धनराशिः अपहृतः। अरुणाचिन्तयत् यदि भ्रष्टाचारस्य एषा निन्दनीया कथा सामान्यजनेषु प्रकाशिता भवति तदा आगामिनिर्वाचनेषु तेषां दलस्य स्थितिस्तु अत्यन्तं विद्रूपा भविष्यति। अतो यथाकथमपि एषा भ्रष्टाचारकथा अनावृता न भवेदेतदर्थं प्रयासोऽनिवार्यः। यदि दलस्य केन्द्रीयनेतृभिः सह समागमावसरे सर्वं वृत्तान्तमुद्घाट्य वर्तमानस्य मुख्यमन्त्रिणः तस्य समर्थकानाञ्च भ्रष्टाचरणम् उद्घाट्यते तदा केन्द्रीयनेतृत्वं भाविनिर्वाचनेषु प्रत्याशिनां चयनस्य कर्तव्य निर्वहणार्थं कौण्डकरमहोदये एव विश्वसिष्यति इति निश्चितम्।

कौण्डकरमहोदये कार्यालयमागते तं सोत्साहमभिनन्दयन्ती अरुणा उपरि निर्दिष्टं पत्रं तस्य सम्मुखमस्थापयत्। पत्रं पठित्वा चिन्तितः कौण्डकरोऽकथयत् - अस्यां भ्रष्टाचरणकथायां प्रकाशितायां तु अस्माकं दलस्य स्थितिः अत्यर्थमभद्रा भविष्यति। अरुणा उदतरत् - युक्तं कथयति भवान्, परमस्माकं प्रयासः उभयविधोऽपेक्षितः - दलस्य केन्द्रीयनेतृत्वस्य समक्षं वर्तमानमन्त्रिमण्डलस्य भ्रष्टाचरणयुक्तं चरित्रमुद्घाट्य, वयमेव एतस्याः कथाया लोके प्रकाशनं निरोद्धुं क्षमा, एतादृशमाश्वासनं दत्त्वा, आत्मनः शक्तिप्रदर्शनं कृत्वा केन्द्रीयनेतृत्वस्य विश्वासार्जनम्, अथच, अस्य पत्रस्य लेखकं लब्ध्वा तस्योपरि आत्मनो नियन्त्रणं साधयेम। एवं वयं सम्पूर्णस्य दलस्य राजनीतिं हस्तगतां कर्तुं प्रभवामः।

अरुणाया योजनया अत्यन्तमुत्साहितः कौण्डकरोऽकथयत् - भवती सत्यमेव राजनीतिशास्त्रस्य पण्डिता। भवत्या मार्गदर्शने आगामिनिर्वाचनेषु अवश्यमेव अस्माकं दलं न केवलं बहुमतं प्राप्स्यति, अपितु मम मुख्यमन्त्रिपदमपि सुनिश्चितमिव प्रतीयते। परं, पत्रलेखकेन आत्मनः परिचयस्तु प्रच्छन्न एव रक्षितः, कथं वयं तं मार्गयिष्यामः।

अरुणा तस्मिन् पत्रे एकस्मिन् कोणेऽङ्कितान् सप्तसंख्याकानङ्कान् निर्दिश्याकथयत् - एष तावत्तस्य दूरभाषोऽङ्कः सम्भवति। अस्य परीक्षणे नास्ति दोषः। अरुणाया अभिमतमवगम्याविलम्बं कौण्डकरमहोदयो दूरभाषेण सङ्केतिताङ्कान् मेलयित्वा अन्यपक्षस्य प्रतिक्रियामपैक्षत।

अरुणाया अनुमानमवितथमासीत्। कौण्डकरमहोदयः अपरतः अशृणोत् - हंहो, कोऽस्ति भो, नमस्कारः। कौण्डकर उदतरत् - अहं विधायकः कौण्डकरोऽस्मि। अधिगतं मया भवतां पत्रम्। किं भवानात्मनः परिचयं दत्त्वा अनुग्रहीष्यति माम् ? अपरत उत्तरमशृणोत् - भ्रष्टाचारकथानां प्रकाशकान् राजनीतिज्ञा नैव प्रशंसन्ति, अतः परिचयस्य तु महत्त्वं नास्ति। भवतां सर्वकारस्य लोकनिर्माणविभागे व्याप्तस्य भ्रष्टाचरणस्य सम्पूर्णं वृत्तं सप्रमाणं मया पत्रद्वारेण भवतां समक्षं प्रकाशितम्। भवान् खलु सत्तारूढदलस्य प्रभावसम्पन्नो विधायकः। यथोचितं भवद्भिः स्वयमेव कर्तव्यम्। कौण्डकरोऽकथयत् - कृतार्थोऽहं भवतामनुग्रहेण। दोषदर्शनेन भवान् दलस्य, सम्बन्धितानाञ्च

विधायकानां शुभमेवाकार्षीत्। अनया सूचनया अहम्प्रसन्नोऽस्मि। भ्रष्टाचरणं तु यत्रापि वर्तते तस्योन्मूलनमावश्यकम्। अहं भवतां दर्शनाभिलाषी अस्मि। श्वः सायंकाले पञ्चवादनसमये आत्मनः कार्यालयेऽहं भवता सह चायपानं कर्तुमिच्छामि। आशासे, मम निमन्त्रणं स्वीकृत्यावश्यमेव भवान् माम् अनुग्रहीष्यति। उत्तरस्य प्रतीक्षां विनैव कौण्डकरः दूरभाषं व्ययुनक्।

उत्सुकतया कौण्डकरं पश्यन्ती अरुणापृच्छत् – किं स आगमिष्यति ? कौण्डकरः प्रत्यवदत् – स हि महत्त्वाकाङ्क्षी प्रतीयते। मम मैत्री प्रस्तावं श्रुत्वा सोऽवश्यमेवागमिष्यति। कार्यालयात् निवृत्तः कौण्डकरमहोदयः स्वगृहमगच्छत्। अरुणापि स्वगृहमागता।

गृहमागत्य वेत्रासने उपविश्य अरुणा सर्वप्रथमं पितृष्वसुः पत्रं झौलिकात् निस्सार्य पठितुमारब्धवती –

प्रिये अरुणे,

सदैव प्रसन्ना तिष्ठ। त्वत्कृते मम हार्दिकान्याशीर्वचांसि। संवर्धितस्तव पुत्र इदानीं यावदवश्यमेव पटुस्तीक्ष्णबुद्धिश्च भविता, इति सम्भावयामि।

दीर्घकालानन्तरम् अधिगत्य तव पत्रम् अहं, तव माता, पिता च, सर्वेऽपि भावविह्वला अभवन्। गृहत्यागानन्तरं मुम्बईमहानगरीं गत्वा त्वया तु स्वकुटुम्बात् सम्बन्धविच्छेद एव कृतः। दुहितरः पितृगृहाद् गच्छन्ति [illegible] युक्तम्, परमेवं पूर्णतयैव कुटुम्बं विस्मृत्य, आत्मनः पत्रादेशं समाचारं वा अदत्वैव कुटुम्बाद्दूरमवस्थानं तु नैवोचितम्। तव पत्रं प्राप्य तव पिता माता च त्वां, त्वया भुक्तानि कष्टानि च स्मृत्वा अत्यधिकमरुदताम्। अहं तु दुर्भाग्यशालिनी अस्मि। पतिः मां त्यक्त्वा, संसारमेव परित्यज्य गतः। त्वाम्प्रति मदीयः स्नेहभावोऽपि ईश्वरेण न मृष्टः। त्वमपि मां परित्यज्य गता।

अज्ञातायां मुम्बईमहानगर्यां निवासस्थानस्य व्यवस्था एव सर्वाधिकं कठिना। महाविद्यालये प्राध्यापिकापदे नियुक्तिरपि सुकरा नास्ति। एकाकिन्या त्वया महाविद्यालयस्य सेवाकार्यसमकालमेव शिशोः पालनेऽपि अत्यधिकं कष्टमनुभूतं भवेत्, नैतदवगन्तुं कठिनम्।

प्रमोदविषये तव कृते आश्चर्यकरः समाचारोऽस्ति। प्रवञ्चकेन तेन अमेरिकायां निवासस्याभिलाषेण सरलहृदयां त्वां परित्यज्य जूह्या सह विवाहः

स्वीकृत आसीत्। अमेरिकायां पितुः विशालाकारस्य व्यापारस्य एकमात्रम् उत्तराधिकारिण्या जूह्या सह विवाहस्य अतिक्रान्तमर्यादस्य तस्य स्वप्नोऽपूर्ण एव अतिष्ठत्। षण्मासावधिपर्यन्तं परिचर्यानन्तरमपि तेनासन्तुष्टया तया स सतिरस्कारं विवाहात्पूर्वमेव परित्यक्तो, भारतं प्रत्यावर्तितश्च। स इदानीमत्रैव निराशायामितस्ततो भ्राम्यति। तस्य परिवारजनाः तव विषये अजिज्ञासन्त, परं तव कुशलक्षेमविषये, पत्रादेशादिविषये च स्वयमेवानभिज्ञा वयं न किमपि कथयितुमशक्नुम।

महाविद्यालये नियमितरूपेण प्राध्यापिकापदे तव नियुक्तिं, राजनीतिक्षेत्रे महत्त्वयुक्तां तव स्थितिं च ज्ञात्वा सर्वे वयं सन्तोषमनुभवामः।

भ्रात्रा, भ्रातृजायया च सह वार्तालापेषु तव प्रसङ्गे समुपस्थिते सर्वेऽपि वयमश्रुप्रवाहं रोद्धुं न पारयामः। तयोर्वेदनाया गाम्भीर्यं शब्दैरभिव्यञ्जयितुं न शक्यते। किं तव मनो मातरं पितरं वा न परिष्विस्वङ्क्षते ? पितृष्वसाहं तु तृतीये स्थाने तिष्ठामि।

तव शुभाकांक्षिणी,

अनुराधा

वारं वारं पत्रम्पठन्त्या अरुणाया मनो मातरं, पितरं, पितृष्वसारञ्च स्मृत्वा अवसन्नमभवत्। करुणेन सह तस्याः पित्रोः गृहे गमनस्य सम्भावना नासीत्। पित्रोः पितृष्वसुर्वा अत्रागमनेन सर्वं विपर्यस्तं भविष्यति। एवं विचारपरम्परा कुलारुणा सायन्तनानि कार्याणि सम्पाद्य शयनार्थमास्तरणं समविशत्।

परेद्युः सायंकाले कार्यालये यदा कौण्डकरमहोदयोऽरुणया सह आगामिनिर्वाचनान्यधिकृत्य विमर्शे मग्न आसीत्, सेवक आगत्य अकथयत् - द्वारस्थो भवतां दर्शनार्थी कश्चिदपरिचितः प्रवेशार्थं प्रार्थयते। पूर्वस्मिन् दिने दूरभाषेणामन्त्रितमपरिचितं स्मृत्वा कौण्डकरमहोदय 'आगन्तुकं सादरमानय' इत्याज्ञापयत्।

अरुणाप्यवागच्छत्, कौण्डकरञ्चाकथयत् - आर्य, भवता अत्यधिकं संयमेन व्यवहर्तव्यम्। भावावेशे न किमपि वक्तव्यम्। कौण्डकरमहोदयः संक्षिप्तमेवोदतरत् - भवती अपि अत्रैव वर्तते। आवां मिलित्वैव सर्वं साधयिष्यावः।

अत्रान्तरे सेवक एकेनापरिचितेन सह कार्यालयं प्रविष्टः। आगन्तुकाय स्वागतं व्याहरन् कौण्डकरमहोदय आसनं निर्दिश्य तमुपवेष्टुं प्रार्थयत, सेवकञ्च चायमल्पाहारञ्च आनेतुमादिशत्।

गते सेवके कौण्डकर आगन्तुकमपृच्छत् – लोकनिर्माणविभागे भ्रष्टाचरण विषयकं पत्रमत्रभवानेवालिखत् ? 'आम्, अहमेवालिखम्' इति आगन्तुक उदतरत्।

कौण्डकरोऽकथयत् – भवता पत्रे स्वनामोल्लेखो न कृतः। किमिदानीमहं स्वमित्रस्य नाम ज्ञातुं शक्नोमि ?

आगन्तुकोऽकथयत् – प्रथमपरिचये एव 'मित्र' इति सम्बोधनं ममाश्चर्यमिश्रितं हर्षं जनयति।

कौण्डकरोऽकथयत् – मह्यं पत्रं लिखित्वा भवान् मयि विश्वासमदर्शयत्। भवान् पश्यत्येव यद्भ्रष्टाचरणस्योन्मूलनम्प्रति एकान्ततया प्रतिबद्धोऽहम्। एवं विश्वसन्नेव भवान्मम निमन्त्रणं स्वीकृत्यात्रागतः। एकेनैवोद्देश्येन प्रतिबद्धावावां परस्परं समक्षं स्थितौ स्वः। अत आवां मित्रे इति निश्चितम्।

आगन्तुकोऽवदत् – भवान्मां मित्रं मन्यते, इत्यात्मानं गौरवान्वितम् अनुभवामि। मां प्रियदर्शनं कथयन्ति। पूनानगरं मम जन्मभूमिरस्ति। अत्र मुम्बईमहानगर्यां विलेपार्लेक्षेत्रे निवसामि। लोकनिर्माणविभागस्य कार्याणां संश्रवा मम व्यवसायोऽस्ति।

एतदन्तराले सेवकः चायमल्पाहारं च फलके स्थापयित्वा गतः। अरुणा चायेन चषकान् पूरयित्वा एकं चषकं प्रियदर्शनाय उपहरन्ती सस्मितमकथयत् – अयं चषकः अस्माकं मैत्रीचषकः स्यात्। अरुणायाः कथनेनाभिमन्त्रित इव प्रियदर्शनः समन्दस्मितं ससङ्कोचञ्च तस्याः कराग्रात् चषकमगृह्णात्।

चायमुपस्पृशन् प्रियदर्शनोऽवदत् – विमलात्मा न्यायाचारश्च भवान् इति भवतां समक्षं लोकनिर्माणविभागस्य भ्रष्टाचरणकथामनावृतां कर्तुमत्रागतोऽस्मि। राज्यसर्वकारस्य लोकनिर्माणमन्त्री अत्यन्तं भ्रष्टोऽस्ति। परिणामतः अस्य विभागस्य सर्वेऽप्यधिकारिणो भ्रष्टाचरणे संलिप्ताः सन्ति। अत एव सच्चरितं ते कण्टकमिव मन्यन्ते।

कौण्डकरमहोदयोऽवदत् – नैतदुचितम्। लोकनिर्माणमन्त्रिमहोदयोऽति

सज्जनः, प्रजाहितकारी च। भवंतामवगमो भ्रमविजृम्भितः सम्भवति।

अरुणया उपहृतेन मैत्रीचषकेन स्निग्धीभूतः प्रियदर्शन उदतरत् – श्रीमन् नैवम्। तथ्याधारिता वर्तते मदीयावधारणा। लोकनिर्माणविभागे मन्त्रिणः कार्यालये अनेका योजनाः परिकल्प्यन्ते, तासां कृते धनस्य व्यवस्था क्रियते, संश्रवा दीयन्ते, लेख्यपत्रादीनां सर्वा औपचारिकताः पूर्णाः क्रियन्ते, परं वस्तुतः सर्वं लेख्यपत्रेष्वेव भवति। याथार्थ्येन तु न किमपि क्रियते। यथार्थतोऽवर्तिष्णूनि कार्याणि सर्वे प्रमाणयन्ति। धनं मन्त्रिमहोदयोऽधिकारिणश्च सर्वे एव मिलित्वा संविभजन्ति। एवं प्रजाया राज्यस्य च विशालो धनराशिः कल्याणकार्येषु विकासकार्येषु च उपयोगापेक्षया लुब्धानां, दम्भिनां, कुटिलाचाराणां राजनीतिज्ञानाम् अधिकारिणाञ्चोदरेषु गच्छति। अनेन रहस्योद्घाटनेन राजनीतिज्ञानामधिकारिणाञ्च क्रोधपात्रं भविष्यामि, इत्यहं सुष्ठु जानामि। जानाम्यहं यदेतदनन्तरं नाहं सुरक्षितः स्थास्यामि, परं किं करोमि, जिजागरिषु मदीयं मनोऽधुना तूष्णीं न स्थास्यति।

कौण्डकरमहोदयोऽवागमत् यत् कञ्चिद्बृहन्तं पणार्पकं प्रति वैमनस्य कारणात् तं विनाशयितुमेवैष मत्पार्श्वमागतः। साम्प्रतं तु अस्यैतस्याः प्रवृत्तेर्निवृत्तिरेव श्रेयस्करी। केवलं स्नेहन मैत्रीभावेनैव च एष निरोद्धुं शक्यते। एवं विचार्य मधुरया गिरा कौण्डकरमहोदयोऽब्रवीत् – मित्रवर, भ्रष्टाचरणस्य तु अहं शत्रुरस्मि। अपयशस्कराणां गर्हणीयानामेतादृशानां व्यवस्थातिक्रमाणाम् उन्मूलनेऽहं सदैव तत्परस्तिष्ठामि। कृतज्ञोऽस्मि अत्रभवतां यद् भ्रष्टाचरणस्यैतेन महता घटनाक्रमेण भवान्मामभिज्ञमकारयत्। जानात्येव भवान् यन्निर्वाचनानां तिथयो निश्चिता उद्घोषिताश्च। इदानीं यदि वयं एतत्सर्वं वृत्तजातमनावृतं कुर्मो विरोधिन एवानेन लाभान्विता भविष्यन्ति। अत्रभवानस्माकं मित्रम्। मित्ररूपेण मदीयेयं प्रार्थना यन्निर्वाचनानन्तरं सूक्ष्मतया अन्वेषणं कारयित्वा अपराधिनो दण्डयिष्यामः, तावत्पर्यन्तं अत्रभवता तूष्णीमेव स्थातव्यम्।

प्रियदर्शनस्य प्रतिक्रियायाः प्रतीक्षां विनैव अत्यधिकं विश्वस्तारुणा रहस्यम् आचिख्यासन्तीव तमवोचत् – सौभाग्येन यदि कौण्डकरमहोदयः स्वयं मुख्यमन्त्रिपदासीनो भवति, आशासे भविष्यत्येव, तदा भ्रष्टाचारिणो विरोधिनस्तु दण्डनीया भविष्यन्त्येव, अस्माकं विशिष्टं मित्रं भवानपि असाधारण्येन

लाभान्वितो भविष्यति। न्यायाचारी सत्यवादी च भवान् विशालाकारं कञ्चित् संश्रवं प्राप्स्यति।

प्रसन्नमुखः प्रियदर्शनोऽवदत् - नाहं व्यक्तितः कस्यापि विरोधी, केवलं समाजे-देशे-राजनीतिज्ञेषु-अधिकारिषु च व्याप्तस्य भ्रष्टाचारस्य उन्मूलनार्थमेव कृतप्रतिज्ञः। साम्प्रतं भवान् मम मित्रम्, यथा भवान् कथयति तथैव भविष्यति। निर्वाचनेषु भवतां विजयार्थं प्रचारादिकं यत्किमपि शक्यमहं मित्ररूपेण करिष्यामि। अहमत्रभवन्तं मुख्यमन्त्रिपदे सुशोभितं द्रष्टुमिच्छामि।

उत्साहितारुणावदत् - भवान् सर्वं वृत्तजातं विस्तरेणास्मान् कथयतु। सर्वा योजना या लेख्यपत्रेषु पूर्णा, यासु सर्वकारेण परिकल्पितः कोशाधीशेन च अनुज्ञातः सम्पूर्णो धनराशिर्व्ययीकृतः, परं वस्तुतो निर्माणकार्यस्य चिह्नमपि न दृश्यते, तत्सर्वं कथयतु। उपस्थिते हि उचितावसरे अपराधिनोऽवश्यमेव दण्डपात्राणि भविष्यन्ति।

प्रियदर्शनोऽब्रवीत् - एतानि लेख्यपत्राणि मम पार्श्वे सन्ति। मित्रत्वेनैतानि सर्वाणि अत्रभवते समर्पयामि। लेख्यपत्राणामध्ययनेन सर्वं भवान् स्वयमेव ज्ञास्यति। पुनश्च, यदापि आवश्यकता भवेन्मित्ररूपेण सदैवोपलभ्यः स्थास्यामि।

प्रियदर्शनाल्लेख्यपत्राणि गृहीत्वा कौण्डकरमहोदयोऽरुणायै समर्पयन्नकथयत् - अस्मिन् कार्यालये मित्ररूपेण भवतामागमनं सदैव स्वागतयोग्यम्। ईश्वर कृपया भवतां च सहयोगेन यद्यहं मुख्यमन्त्री भवामि तदा मुख्यमन्त्रिकार्यालये ऽपि भवतां स्वागतं निर्बाधं भविष्यति।

कौण्डकरमहोदयेनानुज्ञातः प्रसन्नः प्रियदर्शनः कार्यालयाद्बहिर्निर्गतः। श्वःश्रेयसः प्रमुदितः कौण्डकरमहोदयोऽरुणामकथयत् - नवमेतदावयोर्मित्रं तु अत्यधिकमुपयोगि वर्तते। भवती सर्वेषामेवैतेषां लेख्यपत्राणां गहनतयाध्ययनं कृत्वा कथयतु कियन्मात्रं सत्यं वर्तते प्रियदर्शनस्याभियोगे।

तत्कालमेव लेख्यपत्राणामध्ययने संलग्नारुणा सर्वमधिगम्य परेद्युः कौण्डकरमहोदयमवोचत् - अत्यन्तमुपयोगीनि वर्तन्ते एतानि लेख्यपत्राणि। अध्ययनानन्तरं स्पष्टं प्रमाणितं भवति यन्न केवलं लोकनिर्माणमन्त्री अपितु स्वयं मुख्यमन्त्री अस्मिन् महाकाये भ्रष्टाचरणे संलिप्तोऽस्ति। एतत्सर्वं सप्रमाणं दलस्य केन्द्रीयान् पुरोगामिनो मार्गदर्शकान् दर्शयित्वा वयं साधयितुं पारयिष्यामो

यद् दलस्य निमज्जन्तीं नावं केवलं वयमेव रक्षितुं शक्नुमः। निर्वाचनेषु प्रत्याशिनां चयनस्य कर्तव्यनिर्वहणेऽपि वयमेव क्षमाः। वर्तमाने आसनासीनो मुख्यमन्त्री पूर्णतया भ्रष्टोऽविश्वसनीयश्चास्ति। यदि तस्य भ्रष्टाचरणं जनतायां प्रकाशितं प्रमाणितञ्च भवति तदा केवलं विरोधिन एव जेष्यन्ति, अस्माकं दलस्य विजयस्य तु प्रश्न एव न स्थास्यति, इति।

रविवासरे महाविद्यालयेऽवकाश आसीत्। प्रभातसमये सद्यःस्नाता रुचिरे अंशुके वसाना केशानाकुञ्च्य उज्ज्वलान् नवजलकणान् श्च्योतयन्ती अरुणा स्वगृहस्य प्राङ्गणे वेत्रासने उपविष्टासीत्। अत्रान्तरे घण्टिकायाः स्वरो द्वारे कस्यचिदुपस्थितिमसूचयत्। उद्घाटिते द्वारेऽरुणा अनिमिषनयनाभ्यां रानीं सतीशञ्च पश्यन्ती आश्चर्यमिश्रितं हर्षमभिव्यञ्जयन्ती स्वागतवचनेन तावभ्यनन्दयत्।

तयोरागमनेन अरुणां स्तब्धां दृष्ट्वा सतीशो विहस्यावदत् – नाहमेतादृशो विकरालदर्शनो यन्मां दृष्ट्वा अत्रभवती एवं वाग्रहिताभवत्।

अरुणा उदतरत् – नैवं नैवं, वस्तुतः प्रथमवारमागतौ युवामेकत्र दृष्ट्वा हर्षातिरेकेण किंकर्तव्यविमूढा साद्यस्कतया न किमपि वक्तुमपारयम्। भवद्भ्यामत्रागमनेन कृतार्थितमेतन्मे गृहम्। आगम्यताम्, अन्तः प्रविशताम्, हृदयेन सभाजयामि अत्रभवन्तौ।

श्रुतं मया यन्मम प्रियः स्वसृहृदयेशः सदैव कार्यव्यापृतस्तिष्ठति, न चाधिगच्छत्यवकाशं पत्न्या योगक्षेममपि द्रष्टुम्। एवं परिहसन्तो वार्तालापं कुर्वन्तः सर्वेऽपि उपवेशनशालायामागताः।

चायमल्पाहारञ्च गृहीत्वा किचित्कालानन्तरं सतीशोऽकथयत् – आर्ये, जानाति हि भवती यदागामिनिर्वाचनेषु अस्माकं गणाधिपतिः विजयी भूत्वा विधानसभां गन्तुमिच्छति। शक्तिसामर्थ्यसम्पन्नः समाजे प्रतिष्ठितश्च स भवत्याः सहयोगं प्रार्थयते। निर्वाचनेषु स दलस्य प्रत्याशी भवेदिति भवत्या एव सुनिश्चेतव्यम्। स हि कौण्डकरमहोदयस्य, व्यक्तितो विशेषतश्च भवत्या उपकारबद्धः स्थास्यति, सदैव भवत्याः सेवायां तत्परः स्थास्यति। एकवारं निर्वाचनेषु तं प्रत्याशिनं विधाय भवती आत्मानमप्युपकरिष्यति। तस्मिन् पार्श्वस्थे कीदृशमपि प्रातिकूल्यं भवत्या मार्गे न स्थास्यति। तस्य सहयोगः सर्वा अपि

बाधाः परिहर्तुं क्षमः। तस्मिन् भवत्याः समर्थने स्थिते न कोऽपि भवत्या विरोधे स्थास्यति। यदि भवती तस्य प्रत्याशित्वं निश्चिनोति, सोऽपि भवत्या विजयं सुनिश्चितं करिष्यति। अद्याहं गणाधिपतेः सन्देशवाहकोऽस्मि। कौण्डकरमहोदयस्य भवत्याश्च कृतवेदी असौ क्रीतदास इव भवतोः सेवायां स्थास्यति।

अकस्मात् एका विशिष्टप्रकारा द्युतिररुणाया नयनयोरस्फुरीत्। अव्यक्तं हसन्ती सा अब्रवीत् – मम प्रियायाः स्वसुः प्राणनाथो भवान्, अतो ममापि स्नेहपात्रम्, नाहं भवतः कथनं प्रत्याख्यास्यामि। यदि भवानिच्छति यद् भवतां गणाधिपतिर्निर्वाचनेषु प्रत्याशी भवेत्, स प्रत्याशी भविष्यति। परमहं ज्ञातुमिच्छामि यन्मत्कृते स किं कर्तुं शक्नोति ? भवतां कथनेन मदीयैः प्रयासैश्च यदि स निर्वाचनेषु प्रत्याशी भवति, विजयी भूत्वा विधानसभासदस्यश्च भवति, कीदृशी तावत्तस्य भूमिका भविष्यति ?

सङ्कुचितः सतीशोऽवदत् – गणाधिपतिः केवलमेतन्मात्रमकथयत् यत्स क्रीतदास इव भवत्याः सेवायां स्थास्यति इति।

यद्येवं भवतो गणाधिपतिं कथय यत् स कौण्डकरमहोदयस्य कार्यालयम् आगत्य आवयोः समक्षं व्यक्तितः सर्वं स्पष्टीकरोतु। तस्य प्रत्याशित्वं तत्कालमेव नियतं भविष्यति। राजनीतिक्षेत्रे कौण्डकरमहोदयस्य प्रभावो बहुविस्तीर्णः। गणाधिपतेः अस्माकं च साहचर्यं तस्यापि कल्याणाय भविष्यति।

एतद्वार्तालापं श्रुत्वा रानी साश्चर्यमचकथत् – निर्वाचनेषु विजयं प्राप्य एवं दुर्वृत्तानां पापात्मनां सर्वकारे नियन्त्रणे सति न्यायो, धर्मः, सत्यं, नीतिः इत्यादिकानां जीवनमूल्यानां किं भविष्यति ?

रान्याः कथनेनाकस्मात् क्रुद्धः सतीशोऽवदत् – किं कथयसि, तूष्णीं भव, नान्यः शब्दो गणाधिपतेर्विरुद्धम्। यं दुर्वृत्तं पापात्मानं कथयसि तस्यैव संरक्षणे सर्वे राजनीतिज्ञा राजनीतिं कुर्वन्ति। तस्य साहाय्येनैव समाजे विचरन्ति, तमेव च दुर्वृत्तं कथयन्ति। एवं किञ्चित्कालं यावत् विविधा वार्ताः कृत्वा अरुणयानुज्ञातौ रानीसतीशौ प्रस्थितौ।

अद्य हि कौण्डकरमहोदयो नगराद्बहिरासीत्, तस्य कारयानञ्च अरुणाया एव विनियोगाधिकारे आसीत्। सुसज्जिता भूत्वा चालकञ्चाकार्यारुणा

कारयानेन शिक्षाभारतीविद्यालये करुणस्य छात्रावासम्प्रति चलिता।

प्रातरारभ्य तस्याः प्रतीक्षायां लग्नः करुणो विलम्बादागतां मातरं दृष्ट्वा पुलकितो भूत्वा धावित्वा तां पर्यष्वजत, सापि तं दृढमालिङ्ग्य भृशमचुम्बत्। अरुणा छात्रावासाध्यक्षाया अनुज्ञां प्राप्य करुणं सार्धं नीत्वा तस्य मनोरञ्जनार्थं विभिन्न स्थानानि अगच्छत्। द्वावप्येकस्मिन् महार्घे भोजनालये भोजनम् अकुरुताम्।

छात्राणां दक्षिणभारतदर्शनार्थं यात्राविषये अरुणया सह विमर्शाय प्रधानाचार्यस्तां गृहमागन्तुं सम्प्रार्थयत, अतः सापराह्णे करुणं छात्रावासाध्यक्षायै समर्प्य प्रधानाचार्यस्य काणेमहोदयस्य गृहं प्रति प्राचलत्।

यदारुणायाः कारयानं काणेमहोदयस्य गृहं सम्प्राप्नोत् मेघो धारासारमवर्षत्। वृष्टिधारासम्पातस्यातिशय्यं दृष्ट्वा सङ्कोचशीलापि सा कारयानादवतीर्य यावद् गृहद्वारं प्राप्ता एतावन्मात्रे एव काले वर्षाजलेन समुक्षिताभवत्। घण्टिकास्वरं श्रुत्वा काणेमहोदयो द्वारमुद्घाट्य द्वारे समुपस्थितामरुणां दृष्ट्वा तस्या अनुपमेन सौन्दर्येण मुग्ध इवावाक् स्थितः।

ईषत्स्मितमवकिरन्त्यरुणा मध्विव वर्षन्त्यवदत् – किं गृहे प्रवेशार्थं मां नानुज्ञास्यति भवान् ? विस्मयाकुल इव, तन्द्रामुक्त इव काणेमहोदयः स्वागतं व्याहरन् तां गृहाभ्यन्तरमागन्तुं प्रार्थयत। एवं परस्परमभिवादयन्तौ तौ उपवेशनशालामागत्य उपविष्टौ।

विप्रकीर्णाः चूर्णकुन्तला, ईषद्विश्लथः केशबन्धः, सान्द्रयोः कपोलयोः अङ्गुलग्रा जलेनाभ्युक्षिताः प्रान्तोन्मीलिताः केचन अलका, आर्द्रतया नासाग्र पर्यन्तं प्रसृतं सिन्दूरतिलकं, कोमलेषु अङ्गेषु विसर्पन्त्यः अभिविराजयन्त्यो जलविप्रुष, आर्द्रतया संलग्नशीलायाः कौशेयकञ्चुलिकायाः सूक्ष्मं वीक्ष्यमाणौ उन्नतौ अरुणायाः पयोधरौ, अद्भुतञ्च तस्या लावण्यं निर्वर्ण्य अभिमन्त्रित इव प्रधानाचार्यः काणेमहोदयस्तस्याः समक्षमुपविष्ट आसीत्।

अरुणावदत् – मुम्बईमहानगर्यां वर्षा कदागच्छतीति नानुमातुं शक्यते। होरार्धपूर्वमाकाशः स्वच्छ आसीत्, अकस्मादेव देवो धारासारमवर्षत्।

जागरित इव काणे महोदयोऽवदत्–युक्तं कथयति अत्रभवती। भवत्या वस्त्राणि क्लिन्नानि, मम पत्न्या वस्त्राणि धारयतु, अलं सङ्कोचेन।

अरुणा उदतरत् – धन्यवादः। शीघ्रमेव शोक्ष्यन्ति। अत्रान्तरे काणे महोदयस्य पत्नी उष्णं चायमल्पाहारञ्चानयत्। परस्परमभिवादनानन्तरं सापि तत्रैवोपाविशत्। तयोर्मध्ये कुशलक्षेमादिसामान्यवार्तालापानन्तरं चायपानं कुर्वन् काणेमहोदयः अवदत् – अत्राहूय व्यर्थमेव मया भवती आयासिता। वस्तुतो विद्यार्थिनां भारतदर्शनस्यावश्यकतामनुभवन्नहं साम्प्रतं तेषां दक्षिणभारतस्य यात्राविषये कार्यक्रमं निश्चेतुं भवतीमत्राकारयम्।

कृपया कथयतु भवान् कथमहं महाविद्यालयस्य छात्राणां पर्यटनकार्यक्रमे सहयोगिनी भवितुं शक्नोमि। निर्वाचनानि सन्निकटानि वर्तन्ते। प्रत्याशिनां चयनविषये विमर्शार्थं राजधान्यां समागमो निश्चितोऽस्ति। तस्मिन् समागमे मम उपस्थितिमपि अनिवार्यां मन्यन्ते कौण्डकरमहोदयाः। आत्मनो महत्त्वं प्रतिपादयन्ती अरुणावोचत्।

प्रधानाचार्योऽकथयत् – पञ्चदशदिनानां वर्तते एष पर्यटनकार्यक्रमः। एतस्मिन् कालावधौ विद्यार्थिनो दक्षिणभारतस्य राज्यानां प्रमुखानि स्थानानि द्रक्ष्यन्ति। डॉ. प्रभु महोदयः पर्यटनकार्यक्रमस्याध्यक्षः स्थास्यति। यतोहि युवतीनां छात्राणां संख्यापि पर्याप्तमधिका भविष्यति, अतो भवत्याः सहयोगस्यापरिहार्यता वर्तते। अत्रभवती डॉ. प्रभुमहोदयेन सह मिलित्वा यात्राकार्यक्रमं भवत्याः सुविधा यथा भवेत्तथा निश्चिनोतु। यात्राकार्यक्रमार्थम् अनुमानितं व्ययं मिथो विचार्य परिसंख्यातं स्थूलमानं लिखित्वा प्रस्तुवीताम्। अहं तत् सप्रमाणीकृत्य अपेक्षितं धनराशिं प्रदास्यामि।

दत्तावधानारुणा काणेमहोदयस्य कथनं श्रुत्वा विनम्रतयाब्रवीत् – निश्चिन्तस्तिष्ठतु भवान्। अहं डॉ. प्रभुमहोदयस्यापेक्षानुरूपं साहाय्यं करिष्यामि। डॉ. प्रभुमहोदया मम सम्माननीया वर्तन्ते। एतादृशो यात्राकार्यक्रमस्य मदीयः अद्वितीयोऽयमनुभवः। अभ्यर्हणीयानामत्रभवतामाशीर्वचनैः प्राप्तमङ्गला अहम् अवश्यमेवास्मिन् कठिने कर्मणि सफला भविष्यामि।

अतिशयेन सौन्दर्यसम्पन्नाया युवत्या अरुणाया एवमत्यधिकं सम्मानसूचकैः शब्दैः खिन्न इव काणेमहोदयोऽवदत् – विदुषी अत्रभवती स्वयं सर्वं सिद्धार्थतः सम्पादयितुं क्षमा। भवत्यै मदीयाः शुभाकाङ्क्षास्तु कथनं विनैव सर्वदा वर्तन्ते।

प्रधानाचार्येण काणेमहोदयेनानुज्ञाताऽरुणा आसन्दिकात उदतिष्ठत्।

सपत्नीकः काणे महोदयश्च द्वारपर्यन्तमागत्य तामन्वमन्त्रयत।

निश्चिते दिने कौण्डकरमहोदयोऽरुणया सह राजधान्यां दलाध्यक्षस्य रामरत्नमहाजनमहोदयस्य कार्यालयमगच्छत्। द्वावुपाध्यक्षौ मुख्यसचिवश्च कार्यालये आसन्। परस्परमभिवादनानन्तरं कौण्डकरमहोदयोऽरुणा च आसन्द्योः उप..विशताम्।

वार्तालापक्रमोऽध्यक्षमहोदयेनैव समारब्धः – कौण्डकरमहोदय, भवान् महाराष्ट्रे दलस्य सर्वाधिकः प्रभ..ष्णुः प्रतिनिधिरस्ति। वर्तमानो मुख्यमन्त्रि महोदयो भवतां सहयोगेनैव शासनमनुतिष्ठति। विगतनिर्वाचनेष्वपि विजयानन्तरं वयं तु भवन्तमेव मुख्यमन्त्रिरूपेऽदिदृक्षामहि, परं विधा.यकेषु वर्तमानस्य मुख्यमन्त्रिणः समर्थकानां बाहुल्यान्नैतत् कर्तुमशक्नुम।

कौण्डकरोऽवदत् – यद्यपि नाहं मुख्यमन्त्री तथापि दलस्य शासनं सुरक्षितं तिष्ठेदेतदर्थमहं निरन्तरं सावधानोऽतिष्ठम्। अन्यथा मुख्यमन्त्रिमहोदयस्य, तेषां मन्त्रिणाम्, अधीनस्थानामधिकारिणाञ्च कुकृत्यानां प्रजासु प्रकाशने सति दलस्य शासनस्य नैरन्तर्यन्तु असम्भवमेवासीत्। मदीयैरेव प्रयासैर्विशालाकारा अकीर्तिकारिण्यो भ्रष्टाचरणकथा आवृता अतिष्ठन्। लोकनिर्माणविभागे ऽनाचारस्य कुत्सिता कथा उद्धरणरूपेणैव भवद्भिर्द्रष्टव्या।

अत्रान्तरे अरुणा प्रियदर्शनात्प्राप्तानि लेख्यपत्राणि प्रमाणरूपेण अध्यक्ष महोदयस्य समक्षं स्थापयन्ती अब्रवीत् – पश्यन्तु भवन्त, एतत्तु सङ्केतमात्रम् अस्ति। वस्तुतः कौण्डकरमहोदयस्य कृपयैव मुख्यमन्त्रिमहोदयः शासनम् अनुतिष्ठति। वयमेव जानीमो यत् समाचारपत्राणां सम्पादकेभ्यो दूरदर्शनस्य प्रतिनिधिभ्यश्च कथं वयमेतत्सर्वमावृतमरक्षाम। अस्मिन् महति कार्येऽन्येऽपि सन्ति कतिचिच्छुभचिन्तका येषां साहाय्यं महत्त्वपूर्णमस्ति। सञ्चारमाध्यमैर्हि उद्घाटितेषु एतादृशेषु अनाचारेषु मुख्यमन्त्रिमहोदयस्य, अनेकेषां मन्त्रिणाम् अधिकारिणाञ्च स्थानन्तु कारागारेष्वेव सुनिश्चितम्। यदि कौण्डकरमहोदय एतत्सर्वं नाकरिष्यत् दलस्य शासनं तु निश्चितमेव धराशायि अभविष्यत्, आगामिनिर्वाचनेष्वपि दलस्य विजयस्य सम्भावनात्यन्तं क्षीणाभविष्यत्। मनसा वाचा कर्मणा धनेन च दलस्य हितकारक: कौण्डकरमहोदयसदृशा नेतारो विरला एव भवन्ति।

किञ्चित्कालं यावल्लेख्यपत्राणामध्ययनं कृत्वा, वस्तुतः किमप्यकृत्वैव अनौचित्यपूर्वकं केवलं लेख्यपत्रेष्वेव धनस्य मिथ्याविनियोगं दर्शयित्वा राज्यकोषस्य विशालाकारस्य धनराशेरपहारमवेक्ष्य स्तब्धा, आघातमूर्च्छिता इव, प्रहारजडा इव तीक्ष्णव्यथोपहता दलस्याध्यक्षमहोदयसहिताः सर्वे नेतारो लोकनिर्माणविभागस्य भ्रष्टाचरणकथां यथार्थतोऽवागच्छन्। अस्मिन् भ्रष्टाचरण प्रकरणे मुख्यमन्त्रिणो, लोकनिर्माणविभागस्य मन्त्रिणः, अनेकेषामुच्चा धिकारिणाम्, पणार्पकाणाञ्च संलिप्तता करतलामलकवत् स्पष्टासीत्।

एवं वाग्रहितान् तान् दृष्ट्वारुणावदत् - दलं व्यामोहाद् रक्षितुं कौण्डकर महोदय एतद् भ्रष्टाचरणप्रकरणं प्रजाभ्य आवृतं कथमरक्षत्, एतदहं स्वयं जानामि। अन्यथा दलस्य कीदृशमपयशो भविता इति तु अनाख्येयमस्ति।

अध्यक्षो रामरत्नमहाजनमहोदयोऽकथयत् - युक्तं कथयति अत्रभवती। कौण्डकरमहोदयस्यातिमहत्त्वयुक्तमेतद्योगदानं दृष्ट्वा वयमुपकारबद्धाः स्मः। कौण्डकरमहोदयमेव मुख्यमन्त्रिरूपेण परिकल्प्यागामिनिर्वाचनेष्ववतरिष्यति अस्माकं दलम्।

अरुणाकथयत् - श्रीमन्तः, एतद्ज्ञात्वाश्चर्यान्विता भविष्यन्ति अत्रभवन्तो यद् विधायकमण्डलस्याधिकतरसदस्यानामिदानीं मुख्यमन्त्रिमहोदयात् मोहभङ्गो जातः। अशीतिप्रतिशतं विधायकानामिदानीं कौण्डकरमहोदयस्य समर्थने तिष्ठति। परं, दलस्य स्थितिर्हास्यास्पदं न भवेत् आगामिनिर्वाचनेषु चास्माकं विजयः सुनिश्चितः तिष्ठेदिति हेतोः वयं तूष्णीं तिष्ठामः।

अध्यक्षमहोदयोऽवदत् - दलस्य विधायकेषु व्याप्तमसन्तोषं गुप्तरूपेण वयं जानीमः। पूर्वमेवास्माकीना एषावधारणा यदधुना निर्वाचनेषु कौण्डकर महोदय एव मुख्यमन्त्रिरूपेण प्रक्षेप्तव्यः। एवमेव च वयं करिष्यामः।

कौण्डकरमहोदयोऽकथयत् - यद्येवं तर्हि निर्वाचनेषु दलस्य प्रत्याशिनां चयनस्याधिकारोऽपि ममैव स्यात्। महाराष्ट्रराज्ये ये दलस्य स्थितिं सुदृढां कर्तुं शक्नुवन्ति, येषां विजये नास्ति सन्देहः, येषामाचरणं विवादास्पदं नास्ति, ये दलस्य कृतज्ञाः स्थिरवृत्तयश्च, ते एव प्रत्याशिनः स्युः। एतस्मिन् निर्णये स्वतन्त्ररूपेणाधिकारसम्पन्नो यद्यहं भवामि तदैव दलस्य विजयं सुनिश्चितं कर्तुं पारयिष्यामि।

कौण्डकरमहोदयस्य पक्षं समर्थयन्ती अरुणावदत् – मदीयेयं विनम्रा प्रार्थना यद् इदानीं मुख्यमन्त्रिसहितं मन्त्रिमण्डलस्याधिकांशसदस्या, विधायका, उच्चाधिकारिणश्च भ्रष्टाचरणे आकण्ठं निमग्ना वर्तन्ते। एतादृशे राजनीतिके परिदृश्ये एतत्प्रासङ्गिकं यदत्यन्तं सुरक्षित एव मार्गः स्वीकर्तव्यः। अतः प्रत्याशिनां चयनस्याधिकारो यदि कौण्डकरमहोदयस्य स्वतन्त्र ऐकान्तिकश्च भवति तदैवास्माकं दलस्य विजयोऽसन्दिग्धः स्थास्यति !

अध्यक्षमहोदयोऽवदत् – युक्तमुक्तमत्रभवत्या। अस्मिन् समागमे अस्माकम् एष निर्णयो यत् कौण्डकरमहोदयं मुख्यमन्त्रिरूपेण परिकल्प्यास्माकं दलं निर्वाचनेषु अवतरिष्यति, अथच, प्रत्याशिनां चयनमपि स प्रत्याशिनां गुणदोषादिकं परीक्ष्य सुविधानुसारं स्वतन्त्ररूपेणैव करिष्यति। तस्य निर्णय एवैकान्तिकः स्थास्यति इति।

एवमात्मनः पक्षे निर्णयं श्रुत्वा कौण्डकरमहोदयोऽरुणा च अध्यक्ष महोदयस्य अन्येषाञ्च तत्रोपस्थितानां सदस्यानां धन्यवादं कृत्वा, तैरनुज्ञातौ कार्यालयात् निःसृत्य प्रवासीयगृहम् आगतौ। हर्षस्यातिरेकेण गद्गदौ उभावपि अनायासमेव आलिङ्गनबद्धौ अभवताम्, परं शीघ्रमेव मर्यादास्मरणेन पृथग्भूत्वा आनन्दं द्योतयन्तौ राजनीतिकविमर्शे संलग्नौ। भोजनानन्तरञ्च राजधानीएक्सप्रैसरेलयानेन मुम्बईमहानगरीं प्रत्यागमनाय चलितौ।

अरुणा कौण्डकरमहोदयस्य कार्यालये आसीत्। कौण्डकरमहोदयश्च कस्यचित् सम्बन्धिनो विवाहोत्सवे भागं ग्रहीतुं नगराद् बहिरासीत्। गणाधिपतिः चांदभाईमहोदयः कौण्डकरस्य कार्यालयं प्रविष्टः। परस्परमभिवादनानन्तरं चांदभाईमहोदय आत्मनः परिचयं दत्त्वा स्वयमेवासन्दिकायामुपविष्टः। गणाधिपतेः प्रत्यक्षमुपस्थित्या आश्चर्यान्वितारुणा क्षणान्तरे यथास्थिता भूत्वा तं पुनरभ्यनन्दयत्, सेवकमाकार्य तं चायमल्पाहारञ्चानेतुमादिशत्। तस्याः कल्पनासु गणाधिपतिर्भयावहस्वरूपोऽत्यन्तमुग्रः कर्कशस्वरः कश्चिन्निरन्तरं द्विनालिकाहस्त आसीत्। इदानीं सान्द्रश्मश्रुमीषच्छ्यामवर्णं दीर्घमपि तनुशरीरं प्रभविष्णुव्यक्तित्वसम्पन्नं जनसामान्यमिव तं समक्षमुपस्थितं दृष्ट्वा किञ्चिद् आश्वस्तारुणा तमपृच्छत्- कौण्डकरमहोदयस्तु नगराद् बहिर्वर्तते, कथयतु भवान् यद्यहं भवदर्थे किमपि कर्तुं क्षमा।

चांदभाईमहोदय आमन्द्रस्वरेणावदत् – आर्ये, कौण्डकरमहोदया नात्र वर्तन्ते इति सम्यग् जानामि। वस्तुतो भवत्या एव दर्शनार्थमद्याहमत्रागतः। अहमेव पूर्वं रान्या सह सतीशं भवत्याः पार्श्वं प्रैषयम्। जानात्येव भवती यदहं निर्वाचनेषु विधानसभायाः सदस्यतार्थं प्रत्याशी भवितुमिच्छामि। कौण्डकर महोदयो भवत्याः परामर्शेनैव प्रत्याशिनां चयनं करिष्यति। यदि भवत्या अनुशंसया प्रत्याशी भूत्वाहं विधानसभासदस्यो भवामि तदा राजनीतिक्षेत्रे अथवा जीवने कदापि कीदृशी अपि बाधा भवत्या मार्गं रोद्धुं न शक्ष्यति।

अरुणाकथयत् – आर्य, रानी मम प्रिया सखी अस्ति। प्रत्याशिनां मध्ये भवतां नाम भवेदेतदर्थं यथासम्भवमहं प्रयसिष्यामि। अहं राजनीतिशास्त्रस्य प्राध्यापिकास्मि। अतोऽधिकं न कदापि चिन्तयामि।

चांदभाईमहोदयः तत्क्षणमवदत् – भाषणकलायां निपुणा राजनीतिमर्मज्ञा विदुषी च अत्रभवती नास्ति साधारणी नारी। निर्वाचनेषु प्रत्याशिनी भूत्वा यदि भवती विधानसभासदस्या भवति तदा महाराष्ट्रस्य राजनीतिस्तु भवतीमेव परितो भ्रमिष्यति। अहमद्यात्रभवत्याः समक्षं प्रतिजानामि यद् भवत्या विजयं न कोऽपि रोद्धुं शक्ष्यति।

आत्मानं सुरक्षितां कुर्वती कौण्डकरमहोदयं प्रति च प्रतिबद्धतां प्रदर्शयन्ती अरुणा अकथयत् – जानाम्यहं भवतां प्रभावम्। प्रत्याशिनां मध्ये भवतां नाम अपि निश्चितं भविष्यति, परमहं कौण्डकरमहोदस्य सचिवमात्रमस्मि। अहं भवतां नाम अनुशंसिष्यामि, निर्णयस्तु कौण्डकरमहोदयस्यैवैकान्तिको भविष्यति।

अत्रान्तरे सेवकः चायमल्पाहारं च फलके पर्यकल्पयत्। चांदभाईमहोदयं सम्प्रसादयितुं अरुणा स्वयं चषकं तस्मै समार्पयत।

चायपानं कुर्वन् चांदभाईमहोदयोऽवदत् – प्रत्याशिनां निर्णये सम्पन्ने सति भवती कौण्डकरमहोदयश्च यं यं विजयार्थमनुशंसिष्यत. ते सर्वे एव जेष्यन्ति। मम इच्छां विना मुम्बईमहानगर्यां न कोऽपि, कथमपि, किमपि कर्तुं शक्नोति।

अरुणावदत् – एकः प्रश्नो मां बाधते। भवन्तः, भवतां गणसदस्याश्च भयप्रदर्शनेन प्रजाजनानातङ्कितान् कृत्वा तैरभीप्सितं कारयन्ति। एवमेव ते

अस्माकं दलस्य पक्षे मतदानं कारयिष्यन्ति। परम्, एवं दलस्यापयशस्तु सर्वत्र प्रसरिष्यति। अस्माकं पक्षे मतदानं कृत्वापि तेषां हृदि अस्माकं कृते घृणाभावस्तु स्थास्यत्येव। प्रजाजनानां हृदि व्यापकोऽव्यक्तोऽपि रोषो लोकतान्त्रिकव्यवस्थायां सर्वकारस्य कृते हितकरो न भवति। किमेवं सम्भवति यथा प्रसन्नतया स्वेच्छया च तेऽस्माकं पक्षे मतदानं कुर्वन्तु ?

चांदभाईमहोदयोऽकथयत् - आर्ये, यथा भवती आदिशति तथैव भविष्यति। अस्माकं जनाः प्रतिगृहं गत्वा अस्माकं पक्षे मतदानाय करबद्धं प्रार्थयिष्यन्ते, तेषां सुरक्षाञ्च प्रतिश्रोष्यन्ति। अस्माकमेवं परिवर्तितेनापि व्यवहारेण तेऽस्माकं पक्षे मतदानं करिष्यन्ति, मम जनानां भ्रातृभावं प्राप्य प्रसन्नाश्च स्थास्यन्ति। एवम् आत्मनो निर्णयं दत्त्वा, अरुणया अनुज्ञातः चांदभाईमहोदयः कौण्डकरस्य कार्यालयात् निर्गतः।

अन्येद्युः अरुणा चांदभाईमहोदयस्य आगमनं, तयोर्मध्ये घटितं वार्तालापं च सर्वं कौण्डकरमहोदयमकथयत्। गणाधिपतेः साहसेन किञ्चित्क्रुद्ध इव कौण्डकरमहोदयोऽवदत् - न वयं तं प्रत्याशिनं विधास्यामः। अस्माकं धनेनैव तस्य गणस्य कार्याणि चलन्ति। अस्माकं धनेन विना एते गणाधिपा न किमपि कर्तुं क्षमन्ते। अहं स्वयमेव एनमनुकूलं साधयिष्यामि।

अरुणा उदतरत् - अलं क्रोधेन। यदि वयं तं प्रत्याशिनं कुर्मः सोऽपि अस्माभिः समर्थितानां प्रत्याशिनां विजयार्थं कार्यं करिष्यति। निर्वाचनानन्तरं मुख्यमन्त्रिणः चयनकालेऽपि विधायकान् नियन्त्रितान् रक्षितुं सम्भवतः तस्यावश्यकता भवेत्। अतः सम्यग् विचार्य पश्यतु भवान्, तस्य प्रत्याशित्वे नास्ति कापि हानिः।

कौण्डकरमहोदयोऽवदत् - यद्येवं कथयति अत्रभवती, तदा युक्तम्। सोऽपि प्रत्याशी भवेत्। भवत्या दक्षिणयात्रायाः पूर्वमेव भवती प्रत्याशिनः सूचीबद्धान् करोतु। अद्यैव एतत्कार्यमारब्धव्यम्।

**इति चतुर्थ उच्छ्वासः**

## अथ पञ्चम उच्छ्वासः

निश्चिते दिवसे मुम्बईमहाविद्यालयस्य त्रिंशत् छात्रा, येषु षोडश युवानः चतुर्दश च युवतय आसन्, डॉ. प्रभुमहोदयस्य अरुणायाश्च नेतृत्वे दक्षिण भारतस्य प्रसिद्धानां स्थानानां दर्शनार्थं निर्गताः। मुम्बईहैदराबादरेलयाने द्वात्रिंशत् स्थानानि आरक्षितानि आसन्। आन्ध्रप्रदेशे हैदराबादसिकन्दराबादनगरयोर्युगलं, तयोः परिवेशे स्थितानामैतिहासिकानाम् आधुनिकानाञ्च स्थानानां दर्शनस्य मोहेन सर्वप्रथमं ते तत्रैव गताः। हैदराबादसिकन्दराबादयोर्मध्ये स्थिता चलचित्रनगरी सर्वेषामेव आकर्षणकेन्द्रमासीत्। एतेषां स्थानानां दर्शनं सर्वेषामपि छात्राणां कृते नूतन आश्चर्यकरश्चानुभव आसीत्। चलचित्रनगरीं गत्वा तु तेषां विस्मयः सीमातीत आसीत्। चलचित्रनगर्यामेतादृशी व्यवस्थासीत् यत् कीदृशमपि दृश्यं भवेत्, चलचित्रनिर्मातारो विपुलेन धनेन सह रङ्गजीवकान् नीत्वा यदा तत्रागच्छन्ति तदा ते सर्वविधास्वपि पृष्ठभूमिषु चलचित्राणां निर्माणं कर्तुं शक्नुवन्ति। चलचित्रनगर्या निर्मातृभिः नगराणि, पण्यवीथ्यो, ग्रामा, ग्रामप्रतोल्यो, दुर्गं, दुर्गप्राचीरं, ताजमहलं, मनोहरैः पुष्पैराच्छादितानि विशालान्युद्यानानि, शिल्पनिर्मितैर्मकरैर्युक्ताः सरोवराः, समुद्रतीरं, वनानि, पर्वताः, प्रश्रवणानि, हिन्दोलका, विद्यालयो, महाविद्यालयो, विश्वविद्यालयो, न्यायालयः, कारागारं, विशालाकारेषु राजमार्गेषु कारयानानां धावनं, वायुयान्नानामास्थानं, रेलयानानामास्थानं, बसयानानामास्थानं, पञ्चतारा प्रवासीयगृहं, निर्धनानां कुटीराः, स्वर्गस्थानं, देवमूर्तयो, देवमन्दिराणि, सम्राजां राजसभाः, सर्वविधाः पृष्ठभूमयः तत्र निर्मिता आसन्। यानि दृश्यानि अमेरिकायां यूरोपीयदेशेषु अथवा अन्यदेशेषु चित्राङ्कितानि प्रतीयन्ते तेषां सर्वेषामपि चित्राङ्कनमत्र सम्भवतीति दृष्ट्वा सर्वेऽपि आश्चर्यचकिता अभवन्।

आगतानां छात्राणां ज्ञानवृद्ध्यर्थं चलचित्रनगर्याः प्रबन्धकाः तानेतद् अप्यदर्शयन् यत् कथं प्रतनुशरीरोऽप्येकाकी नायकः स्थूलकायान् बलिष्ठान्

अनेकान् विरोधिनो धराशायिनः करोति। एवमद्य यावत् शाहरुखखान सलमानखानामीरखानप्रभृतीनभिनेतृजनानत्यन्तं बलिष्ठान् मन्यमानानां छात्राणां मोहभङ्गोऽभवत्। अद्य ते सुष्ठु अजानन् यत्तेऽपि साधारजना इव साधारण शक्तिसम्पन्ना एव सन्ति। केवलं चलचित्रनिर्मातृजनानां कौशलेनैव ते एवं सर्वातिशायिनो बलिष्ठाः प्रस्तूयन्ते।

चलचित्रनगरी अनेकयोजनविस्तीर्णं प्रतिष्ठानं वर्तते। यथासम्भवं तत्र भ्रमतामेव विद्यार्थिनां दिवसस्य प्रकाशो मन्दच्छायोऽभवत्, श्रान्ताश्च ते सर्वे विश्रामार्थं भोजनार्थञ्च तेषां कृते निश्चितं प्रवासीयगृहमगच्छन्। तत्र भोजनानन्तरं मनोरञ्जयन्तस्ते दशार्द्धवादनकाले निद्रामग्ना अभवन्।

अपरेद्युः डॉ. प्रभुमहोदयस्यारुणायाश्च नेतृत्वे सर्वे छात्रा ऐतिहासिकानां स्थानानां दर्शनार्थं गताः। कुतुबशाहीसमाधिस्थलं गोलकुण्डदुर्गञ्च दृष्ट्वा ते नवाब अलीकुलीखांसमाधिस्थलं द्रष्टुं गताः। उक्तं समाधिस्थलं हैदराबादस्य सप्तसमाधिस्थलेषु भव्यतमं वर्तते। अत्रान्तरे विद्यार्थिन आपणादिच्छानुसारं वस्तून्यप्यक्रीणन्। युवतयः चारमीनारसमक्षमापणात् मौक्तिकमालाः तथा अन्यानि विविधानि आभूषणानि अक्रीणन्। सायंकाले चतुर्वादनसमये सर्वे सालारगंजविचित्रालय समक्षमागताः। विचित्रालयस्य यामघोषा सर्वेषामेवाकर्षणकेन्द्रमासीत्। विचित्रालये निज़ामेन विभिन्नदेशेभ्य आयातितानि विस्मयकराणि वस्तूनि, पाण्डुलिपयो, रुचिराः पाषाणप्रतिमाः, काचमयस्य काष्ठमयस्य च शिल्पकर्मणः प्रतिमानानि पश्यन्तः सर्वे पञ्चक्षणोनपञ्चवादनकाले यामघोषायाः सम्मुखम् उपस्थिता अभवन्। पञ्चवादने यामघोषाया मध्यत एकं लघुद्वारमपावृतमभवत्, एकः सैनिकस्तस्माद्बहिरागत, एकः काष्ठमुद्गरस्तस्य हस्ते आसीत्, स समक्षं स्थापितं पटहं काष्ठमुद्गरेण पञ्चवारं ताडयित्वा तेनैव द्वारेण प्रत्यवर्तत, द्वारञ्च तत्कालमेव संवृतमभवत्। अद्भुता एषा यामघोषा प्रत्येकं होरा एवमेवासूचयत्।

हैदराबादनगरमध्ये निर्मितो हुसैनीसरोवरः, तस्मिन् स्थापिता महात्मनो बुद्धस्य विशालाकारा प्रतिमा, समीपे एव निर्मितं लुम्बिनी उद्यानं, टैंकबण्डमार्गे निर्मिता मनोहराः प्रतिमाः, स्थानमेतत् गणभोजनायात्यन्तमुपयुक्तमासीत्। अतः अपरेद्युः तत्रागमनस्य कार्यक्रमं निश्चित्य सायंकाले सर्वे प्रवासीयगृहं प्राप्ताः।

अन्येद्युः युवानो युवतयश्च सर्वे विद्यार्थिनः सुसज्जिता भूत्वा निश्चित कार्यक्रमानुसारं हुसैनीसरोवरपरिसरे आगताः। नौकाविहारेण, अन्यैश्च विविधैः प्रकारैरानन्दं भजन्तः सर्वे मध्याह्ने भोजनार्थं श्यामायमाने शाद्वले समवेता अभवन्। तत्र गणभोजने आपणात् क्रीतस्य सिद्धभोजनस्यानन्दो वर्णनातीत आसीत्। भोजनानन्तरं सर्वैर्मिलित्वा नृत्यस्य गायनस्य च आनन्दोऽनुभूतः।

तदनन्तरं सर्वे बिरलामन्दिरनाम्ना प्रसिद्धे मन्दिरे भगवतो वेङ्कटेश्वरस्य दर्शनार्थं गताः। एतन्मन्दिरं भवननिर्माणकलाया अद्भुतं निदर्शनमस्ति। तिरुपतिमन्दिरस्थस्य भगवतो वेङ्कटेश्वरस्य मूर्तिः बिरलामन्दिरे अपि स्थापितास्ति। बिरलामन्दिरस्य एषा भगवद्वेङ्कटेश्वरप्रतिमा तिरुपतिमन्दिरस्य प्रतिमायाः प्रतिरूपं शिल्पस्य च भव्य आदर्शोऽस्ति।

धार्मिकवृत्तयो हैदराबादवासिनो भगवतो वेङ्कटेश्वरस्य भक्ताः सन्ति। मन्दिरस्य परिसरे भक्तानां समूह एवं समवेत आसीद् यथाद्य भगवान् स्वयम् अवतीर्णो भूत्वा भक्तानां दर्शनार्थमत्रागतः।

बिरलामन्दिरस्य दर्शनानन्तरं सर्वे प्रवासीयगृहं प्रतिनिवृत्ताः। तिरुपतिः तेषां समवायस्याव्यवहितं निरूपितं स्थानमासीत्। भोजनानन्तरं सर्वे सज्जिता अभवन्। रात्रौ च तिरुपतिगमनाय रेलयानमारुह्य सर्वे आरक्षितानि स्थानानि अभ्याक्राम्यन्।

अन्येद्युः प्रातः तेषां रेलयानं तिरुपतिं प्राप्तम्। डॉ. प्रभुमहोदयस्य प्रयासैः एकस्यां धर्मशालायामावासस्य व्यवस्थाभवत्। तत्रागत्य सर्वे दैनिकचर्याभ्यो निवृत्ता अभवन्। पिष्टकैः सह चायपानं कृत्वा, सज्जिता भूत्वा सर्वे तिरुपतिनगरस्य दर्शनार्थं निर्गताः।

तिरुपतिनगरस्य समीपे पर्वतशृङ्खलायाः सप्तशिखराणां क्षेत्रं तिरुमालम् उच्यते। वेङ्कटेश्वरस्य भगवतो मन्दिरं तिरुमालशृङ्गस्य भव्ये समतले स्थाने स्थितमस्ति। राजमार्गेण तिरुपतिशृङ्गं प्राप्तुं सार्द्धसप्तक्रोशं यात्राया अनिवार्यता वर्तते। अतोऽन्येद्युरेव तत्र गमिष्याम इति निश्चित्य भोजनार्थं सर्वे एकं स्वच्छं भोजनालयं प्रविष्टाः।

अन्येद्युः प्रातरेव डॉ. प्रभुमहोदयः, अरुणा, सर्वे विद्यार्थिनश्च तिरुमालशृङ्गे स्थितस्य भगवतो दर्शनार्थं सज्जिता अभवन्। पूर्वं निर्धारितेन बसयानेन च सर्वे तत्र प्राप्ताः। पर्वतशिखरेऽपि तत्र मन्दिरस्य विशाले परिसरे विस्तृतं

स्थानमासीत्। मन्दिरपरिसराद् बहिः यात्रिणामावासाय भवनानां श्रृङ्खला, भोजनालयाः, कारबसादीनां विविधानां यानानां कृते पर्याप्तञ्च स्थानमासीत्।

मन्दिरं प्राप्य पंक्तिबद्धाः सर्वे क्रमशः भगवतो वेंकटेश्वरस्य दर्शनानां पुण्येन लाभान्विता अभवन्। भगवतो दर्शनेन भावाभिभूता अरुणा नयने निमील्य किं प्रार्थयत सा स्वयमपि ज्ञातुं नापारयत्। भगवत इच्छानुरूपमेव सर्वं भवति, वयं तु केवलमात्मसमर्पणमेव कर्तुं क्षमाः। अस्मत् कृते किमावश्यकं, किमाकाङ्क्षणीयं, किञ्च शुभं, वयं न जानीमः। सर्वशक्तिसम्पन्नः सर्वव्यापकः सर्वज्ञश्च प्रभुः स्वयमेव सर्वं जानाति। एवं भक्तिभावस्यातिरेकेण विह्वलारुणा आत्मसमर्पणमिव कृत्वा शान्तचित्ता भूत्वा प्रसादं प्राप्य न्यवर्तत।

मन्दिराद् बहिरागत्य सर्वे भोजनस्य व्यवस्थायां संलग्ना आसन्, अत्रान्तरे चलदूरभाषस्य घण्टिकायाः स्वरं श्रुत्वारुणा झौलिकात् निःसार्य एकान्ते गत्वा तदश्रृणोत् – अये, अरुणे, कुत्रासि भवती ?

अपरत्र कौण्डकरमहोदयस्य स्वरं श्रुत्वारुणा उदतरत् – नमस्कारः। अहमत्र तिरुमालश्रृङ्गे भगवतो वेङ्कटेश्वरस्य दर्शनानन्तरं मन्दिराद् बहिरागता एवास्मि। कथयतु भवान् कीदृशः समाचारः ?

कौण्डकरोऽवदत् – भवतीं विना कार्यालये सर्वमव्यवस्थितमिव वर्तते। भवती गणाधिपतिं प्रत्याशिनं विधातुं प्रत्यश्रृणोत्। स हि अधुना मया कल्पितात् स्थानात् प्रत्याशी भवितुमिच्छति।

अरुणाकथयत् – तमवबोधयतु भवान् यत् समयानुसारं निर्णयं करिष्यामः।

कौण्डकरोऽकथयत् – न स किमपि श्रोतुमिच्छति। न चाहं स्पष्टं कथयितुं शक्नोमि। अरुणायाः प्रत्यागमनानन्तरमेव निर्णयो भविष्यतीति कथयित्वा मया स प्रेषितः। यथासम्भवं शीघ्रमागत्य भवत्यैव सर्वं साधनीयम्।

अरुणाकथयत् – शान्तस्तिष्ठतु भवान्। एतन्मात्रमाश्वासनं पर्याप्तं यत्तस्य नाम प्रत्याशिनां मध्ये वर्तते। प्रचारार्थं नियतात् कालात् पूर्वं सर्वं व्यवस्थितं भविष्यति। अहमागत्य सर्वं साधयिष्यामि।

कौण्डकरोऽवदत् – दलस्य टिकटाभ्यर्थिनां तेषां समर्थकानां च समूहा आप्रातः सायंपर्यन्तं निरन्तरमागच्छन्ति। एकाकी अहं निर्णये काठिन्यम् अनुभवामि। भवत्याः परामर्शेनैवोपयुक्ततया सर्वं सम्भवति। अरुणा उदतरत् – सर्वेषाम् अभ्यर्थिनां प्रार्थनापत्राणि एकत्रीकृत्वा भवान् तेषामध्ययनं करोतु।

मम प्रत्यावर्तनानन्तरमेव निर्णयो भविष्यति, इति सर्वान् कथयतु। अत्रान्तरे सर्वानभ्यर्थिनस्तेषां समर्थकांश्च रात्रिभोजनाय आमन्त्रयतु भवान्। मदिराया व्यवस्थावश्यं करणीया। अतिथीन् मदिरया सभाजयितुं यदि कासाञ्चित् सुन्दरीणां युवतीनां व्यवस्था सम्भवेत्, तदपि समीचीनम्। परावृत्याहं सर्वं साधयिष्यामि। एवं समाश्वासयन्ती शुभेच्छाश्चाभिव्यञ्जयन्ती अरुणा चलदूरभाषं व्ययुनक्।

एवं दूरभाषवार्तां परिसमाप्यारुणा समन्दस्मितं सर्वेषां मध्यमागता। आत्मनो महत्त्वस्यानुभूतिस्तां गौरवान्वितामकरोत्। विद्यार्थिभिः सह भ्राम्यन्ती अपि अरुणा सदैव निर्वाचनेषु कौण्डकरमहोदयस्य दलं, तस्य मुख्यमन्त्रिपद ञ्चाधिकृत्यैव विचारपरम्पराकुला अस्थात्।

तिरुमालशृङ्गे भोजनानन्तरं तिरुपतिं प्रत्यावर्तितुं सर्वे बसयानस्य समीपं समवेता अभवन्। तदैवावसरं प्राप्यारुणा दूरभाषेण चांदभाईमहोदयेन सह सम्पर्कं साधयित्वावदत् - हंहो, चांदभाईमहोदय, अपि स्वस्थो भवान् ?

चांदभाईः उदतरत् - अये, नमस्कारः, कुत्रास्ति भवती ?

अरुणावदत् - भगवतो वेङ्कटेश्वरस्य दर्शनार्थमागताहमिदानीं तिरुमाल शृङ्गेऽस्मि। चांदभाईमहोदय, निश्चिन्तस्तिष्ठतु भवान्। अभीष्टात्स्थानादेव टिकटं प्राप्स्यति भवान्। मम प्रत्यावर्तनानन्तरं मिलित्वा विमृक्ष्यामः। यथोचितं सर्वं सुष्ठु भविष्यति।

चांदभाईः अवदत् - अहं भवत्यां पूर्णं विश्वसिमि। भवत्या आगमनेन कदा वयं विश्रान्तिं प्राप्स्यामः ?

अरुणाकथयत् - निर्वाचनेषु तु पर्यासो विलम्बोऽस्ति। सहयोगिभिः सह सज्जस्तिष्ठतु भवान्। नमस्कारः। एवं कथयन्ती सा चलदूरभाषं व्ययुनक्।

विद्यार्थिनामेष समूहः तिरुपतितः चेन्नईनगरमगच्छत्। मैरीना अथवा गोल्डनादिषु समुद्रतटस्य दृश्येषु मुम्बईमहानगर्याश्छात्राणां रुचिर्नासीत्। मैरीनातटे थिरुवल्लवरस्य स्वामिविवेकानन्दस्य च विशालाकारे मूर्ती, चेन्नईविश्वविद्यालयः, अन्नाविश्वविद्यालयः, क्वीन मेरी महाविद्यालयश्च, एतेषां सर्वेषामपि मनोहारिणी भव्यता दर्शनीयासीत्।

अरुणा केषाञ्चिद् देवालयानां दर्शनार्थमुत्सुकासीत्। अतः सर्वेऽपि मयूरपुर्यां भगवतः कपालीश्वरस्य दर्शनार्थं गताः। संयोगवशात् ते भगवतः

पञ्चामृताभिषेकसमये मन्दिरं प्राप्ताः। श्रोत्रियैर्ब्राह्मणैर्वेदमन्त्रोच्चारणपूर्वकम् अत्यन्तं श्रद्धया जलेन, दुग्धेन, दध्ना, मधुना, घृतेन च क्रमशः भगवतः कपालीश्वरस्याभिषेकदर्शनस्य विलक्षणोऽनुभव आसीत्। तदनन्तरं ते शिरडीसाइनो मन्दिरं गता, यत्र भगवतः शिरडीसाइनो विशालाकारा प्रतिमा सत्यं, धर्मः, शान्तिः, प्रेम, इत्यादीनां मानवमूल्यानामेव साक्षात् स्वरूपमासीत्।

अन्येद्युः प्रातः सर्वे पाण्डीचेरीं प्रति प्रचलिताः। मार्गे विद्यार्थिनो मनोहरैः गीतैः, डॉ. प्रभुमहोदयः प्रकृतिदर्शनेन, अरुणा च अतीतस्य स्मृतिभिः यात्रासमयम् अयापयन्। बसयानस्य पाण्डीचेर्याः सिंहद्वारे प्रवेशेन सहैव फ्रांसदेशीयसंस्कृत्याः चिह्नानि दृष्टिगोचराण्यभवन्। सिंहद्वारस्य समीपे एव कस्यचित् फ्रांसदेशीयसैन्याधिकारिणोऽश्वारोहिणः प्रतिमा अदृश्यत।

अरविन्दाश्रमस्य दर्शनं पाण्डीचेर्यागमनस्य मुख्यं लक्ष्यमासीत्। पुष्पैः परिवेष्टितां महर्षेररविन्दस्य समाधिस्थलं प्रति श्रद्धावनताः सर्वे किञ्चित्कालं यावत् तत्रैवोपविष्टाः। तदनन्तरमाश्रमपुस्तकालयस्य, विद्यालयस्य, महाविद्यालयस्य भोजनालयस्य च भव्यतां दृष्ट्वा सर्वे एव आनन्दमन्वभवन्। कानिचित् पुस्तकानि चित्राणि च विद्यार्थिभिः क्रीतानि। ततश्च सागरतटे सुन्दरे एकस्मिन् स्थाने सर्वेऽपि गणभोजनस्यानन्दे निमग्ना अभवन्।

भोजनानन्तरं चेन्नईनगरं प्रत्यावर्तमानाः ते मार्गे महावलीपुरम् प्राप्ताः। किन्नराणां गन्धर्वाणां देवदासीनाञ्च पाषाणप्रतिमाभिरलंकृतस्य महाबलीपुरस्य विस्तीर्णं स्वर्णिमं सागरतटं नातिविशालस्याप्यस्य नगरस्य शोभां विस्तारयति। अस्य सौन्दर्येण विमोहिता विविधदेशेभ्य आगताः पर्यटका निवासे काठिन्यम् अनुभवन्तोऽपि कतिचिद्दिनानि यावदत्र विश्राम्यन्त्येव। पाण्डवा आत्मनोऽज्ञात वासमत्रैवायापयन्, अथच, महद्बलशालिनो भीमस्य नाम्नैवास्य नगरस्य नाम महाबलीपुरमस्तीत्येवं मन्यन्ते जनाः। महाबलीपुरस्य नैसर्गिकशोभाया महिम्नि निमग्नाः सर्वेऽनिच्छन्तोऽपि चेन्नईनगरम्प्रति प्रस्थिताः।

चेन्नईनगरं प्राप्य रात्रिभोजनानन्तरं तेषां वृन्दं बंगलौरनगरम्प्रति प्राचलत्। यायावराणामिव निरन्तरं यियासूनामेषां दलं प्रतिदिनं निशीथिन्यां यात्रापरं रेलयानेषु अथवा बसयानेष्वेव विश्रमायावकाशमलभत।

आन्ध्रप्रदेशे पुट्टापर्तिस्थाने भगवतः श्रीसत्यसाइनो दर्शनार्थं सर्वे एव उत्सुका आसन्। बंगलौरभ्रमणानन्तरं तेषां पुट्टापर्तियात्रायाः कार्यक्रमो निश्चित

आसीत्। बंगलौरनगरं प्राप्य तैरवगतं यत् भगवान् श्रीसत्यसाईबाबा बंगलौरनगरे एव ह्वाइटफील्डनामके स्थाने विशाले आश्रमे आगतस्तिष्ठति। एतज्ज्ञात्वा सर्वेषामेव हर्षः सीमातीत आसीत्।

ह्वाइटफील्डस्थानं बंगलौरनगरतः विंशतिकिलोमीटरदूरस्थं वर्तते। बंगलौर नगरे भ्रमणानन्तरं मध्याह्नभोजनानन्तरं श्रद्धयान्विता भक्तिभावाभिभूताः सर्वे भगवतः श्रीसत्यसाइनो दर्शनार्थं एकेन बसयानेन ह्वाइटफील्डस्थानस्थं भगवत आश्रमं प्रति प्रचलिताः।

भगवत आश्रमम्प्राप्यैवाननुभूतपूर्वां शान्तिमन्वभवन् सर्वे। आश्रमस्य मुख्यद्वारं प्रविश्य समक्षमतिभव्यं विशालञ्च प्राङ्गणमदृश्यत। प्राङ्गणस्य दक्षिणे पार्श्वे सार्द्धचतुरङ्गुलिपरिमाणोन्नते विशाले भूभागेऽतिशोभनः सुप्रभस्तेजिष्ठ एको मञ्चो निर्मित आसीत्। प्राङ्गणस्योन्नते भागे सहस्रशो दर्शनार्थिनो भक्ताः पंक्तिबद्धा भूत्वा उपविष्टा आसन्। डॉ. प्रभुमहोदयः पुरुषविद्यार्थिनश्च दक्षिणपार्श्वे पुरुषाणां पंक्तिषु उपविष्टा, अरुणा च छात्राभिः सह वामपार्श्वे स्त्रीणां पंक्तिषु यथास्थानम् उपविष्टा। मध्ये भगवतः श्री सत्यसाइन आगमनार्थं स्थानं रिक्तमासीत्।

अत्रान्तरे समक्षं मञ्चस्य दक्षिणं द्वारमनावृतमभवत्। तस्मात् पर्पे उपविष्टः कुङ्कुमवर्णे प्रावारके सुवेशो भगवान् श्रीसत्यसाईबाबाः प्रकटोऽभवत्। पञ्चाशीति वर्षदेशीयोऽपि दिव्यतेजोमयत्वात् स्वप्रभया दिश आपूरयन्, शुचिस्मितो, दृष्ट्यैवोपस्थितान् भक्तान् आशीर्वचोभिः कृतकृत्यानिव कुर्वन् भगवान् मञ्चे विराजमानो बभूव। भक्तिभावाभिभूता भक्ता ध्यानमग्ना भूत्वा भगवतः स्तुतिगानमकुर्वन्।

किञ्चित्कालानन्तरं पर्पस्थ एव भगवान् समीपतो दर्शनार्थं भक्तानां मध्ये आगतः। एको भक्तः पर्पं वाहयन् पृष्ठभागे आसीत्, एको भक्तो भगवतो दक्षिणतोऽन्यश्च वामत, उभावपि करबद्धौ, सर्वे एव भगवतः परिचर्यायां तत्पराः सहैवासन्। आशीर्वचोभिः विभूतिप्रसादेन चोपस्थितान् भक्तान् कृतमङ्गलान् कुर्वन् भगवान् पुनर् मञ्चस्थो भूत्वा अमृतसिक्तया गिरा भक्तानुपादिशत् -

ममैवांशभूता अत्रोपस्थिताः सर्वे मम आत्मान, एको भक्तो मामपृच्छत् - भगवन्, जनाः कथयन्ति यद् भवान् ईश्वरस्यावतारः, किं सत्यमेव भवान्

ईश्वरस्यावतारः ? किं सत्यमेव भवान् भगवानस्ति ? अहं तम्भक्तमुदतरम् - अहं भगवान् अस्मि इति सत्यस्य पूर्वः अर्द्धांशः, सत्यस्योत्तरार्द्धांशोऽस्ति यत् त्वमपि भगवानसि। अन्तरमेतन्मात्रं विद्यते यदहं जानामि 'अहं भगवानस्मि' त्वं तु न जानासि यत् त्वमपि भगवानसि। मम प्रिया भक्ता, भवन्तः सर्वेऽपि ईश्वरस्यैवांशा अतो भगवत्स्वरूपाः। यदा यूयं सर्वेषु प्राणिषु व्याप्तमन्तर्यामिनम् ईश्वरं द्रक्ष्यथ तदा सर्वान् प्रति प्रेम्णो भावः स्वत उदेष्यति। प्रेम एव जगतो मूलम्, प्रेम एव सर्वेषामपि दुःखानां विनाशकम्। अतः समाजे सर्वैः सह प्रेम्णा व्यवहरत। सत्यं, धर्मः, शान्तिः, प्रेम, अहिंसा च, सर्वेष्वेव धर्मेषु समानानि एतानि जीवनमूल्यानि चित्ते विनिवेशितव्यानि।

सदैव सावधानास्तिष्ठत, मुखान्निःसृत एकोऽपि शब्दः कस्यापि मनो न तुदेत्। नैकमपि भवतां कार्यमन्यस्य कस्यापि कृते दुःखकारणं भवेत्, कुत्सितः कोऽपि विचारः चित्तं न प्रविशेत्, चरित्रस्य शुचितां प्रति च विशेषेण सदैव सावधानास्तिष्ठत। अन्तर्यामी भगवान् भवतां हृदि निवसति, अतो हृदयं सदैव निर्मलं रक्षत। ईश्वरः भवतां कल्याणं करोतु। एवमुक्त्वा भगवान् श्रीसत्य साईबाबास्तूष्णीमभवत्। क्षणानन्तरं दक्षिणद्वारेणैव भगवान् श्रीसत्यसाईबाबा यथागतं प्रत्यगमत्।

भगवतः श्रीसत्यसाइन उपदेशं श्रुत्वा सात्त्विके आनन्दे निमग्ना अरुणा, डॉ. प्रभु महोदयोऽन्ये च सर्वे विद्यार्थिनः, तत्पश्चात्, नवीनतमाभिः सुविधाभिः सज्जितं श्रीसत्यसाईसुपरस्पैशियलिटिहॉस्पिटलनामकं देशस्य श्रेष्ठं चिकित्सालयं द्रष्टुं गताः। तत्र गत्वा विश्वस्तरवर्तिनः चिकित्सालयस्य विशालतां तत्रत्यानि उच्चगुणयुक्तानि साधनानि च दृष्ट्वाश्चर्यचकितैस्तैर्ज्ञातं यदस्मिन् चिकित्सालये धनिनो निर्धना वा सर्वेषां चिकित्सा निःशुल्कं विधीयते। अत्यन्तं प्रशस्ताः चिकित्सायाः प्रत्येकं क्षेत्रे विशारदाः शल्यक्रियाप्रवीणा विशेषज्ञाः चिकित्सकाः क्रमानुसारमेव सेवाभावेन सर्वेषां चिकित्सां कुर्वन्ति। अत्रत्यानां चिकित्सकानां दक्षतया प्रभाविताः केचन विदेशिनोऽपि अमरीका-इङ्गलैण्डप्रभृतिभ्यो देशेभ्य आगत्यास्मिन् चिकित्सालये हृदयशल्यचिकित्सां कारयन्ति। रोगिभिः सह आगतानां तेषां सम्बन्धिनामपि आवासस्य भोजनस्य च व्यवस्थात्र निःशुल्कं विधीयते।

भगवतः श्री सत्यसाइनः मुख्यं केन्द्रं पुट्टापर्तिः वर्तते, अत एव श्रीसत्य

साइनं 'पर्तीश्वर' इत्यपि कथयन्ति। पुट्टापर्तिस्थितः श्रीसत्यसाइन आश्रमः 'प्रशान्ति निलयम्' नाम्ना प्रसिद्धोऽस्ति। पुट्टापर्तिस्थानेऽपि एतादृश एव श्रीसत्यसाई सुपरस्पैशियलिटिहॉस्पिटलनामकः चिकित्सालयो वर्तते। तत्रापि सर्वेषां चिकित्सा तथैव निःशुल्कं विधीयते। प्रशान्तिनिलये श्रीसत्यसाई इन्स्टीच्यूट ऑफ हायर लर्निङ्गनामको विश्वविद्यालयः शिक्षाक्षेत्रे अद्भुतं कार्यं करोति। एतज्ज्ञात्वा भोजनानन्तरं रात्रावेव सर्वे पुट्टापर्तिं गन्तुं तत्परा अभवन्।

अन्येद्युः पुट्टापर्तिम्प्राप्य भगवतः सत्यसाइनो विश्वविद्यालयं गत्वा प्रत्येकं क्षेत्रे तस्य भव्यतां च दृष्ट्वा अत्यन्तं प्रभाविताः सर्वे तदनन्तरं चिकित्सालयमपि द्रष्टुं गताः। ततश्चात्यन्तमुत्सुकाः सर्वे अत्यद्भुतं कृत्रिमं नभोमण्डलं, विशालं क्रीडाक्षेत्रमत्यन्तं भव्यं विचित्रञ्च चैतन्यज्योतिः संग्रहालयमपि द्रष्टुं गताः। विशालं गोकुलं दृष्ट्वापि सर्वे आनन्दमन्वभवन्। पर्वतश्रेणिषु निर्मिता बृहदाकाराः पाषाणप्रतिमाः पश्यन्तः सर्वे मूर्तिकाराणां शिल्पकौशलं प्राशंसन्। भगवान् श्रीसत्यसाईबाबास्तु बंगलौरनगरसमीपस्थे ह्वाइटफील्डनामके स्थाने निर्मिते आश्रमे एवासीत्, परं प्रशान्तिनिलयस्य दर्शनार्थमागताः सर्वे पुट्टापर्तिनगरेऽपि श्रीसत्यसाइनो आश्रमस्य दर्शनार्थं प्राप्ताः। भगवतो आश्रमस्य शान्तिदायिनीं शोभां, तदीयां वास्तुकलाञ्च दृष्ट्वा सर्वे मुग्धा इवाभवन्। सर्वैरपि तैर्मध्याह्न भोजनं प्रशान्तिनिलये भगवत आश्रमे एव प्रसादरूपेण गृहीतम्। श्रद्धयान्वितास्ते सर्वे विभूतिप्रसादं नारिकेलप्रसादञ्च प्राप्यात्मानं कृतार्थं मन्यमाना आश्रमाद् बहिरागताः। अनिच्छन्तोऽपि ते सर्वे प्रथमं बसयानेन तदनन्तरञ्च रेलयानेन मैसूरनगरम्प्रति प्रचलिताः। मैसूरनगरे मैसूरमहाविद्यालये तेषाम् आवासस्य व्यवस्थासीत्। अन्येद्युः सज्जिता भूत्वा सर्वे मैसूरनगरस्य विशिष्टस्थानानां दर्शनार्थं निर्गताः।

विद्यार्थिनां दलस्य भ्रमणार्थं एकस्य लघुबसयानस्य व्यवस्था कृतासीत्। सर्वप्रथमं ते मैसूरस्य महाराजस्य राजप्रासादानां दर्शनार्थं गताः। प्रवेशपत्राणि क्रीत्वा राजप्रासादानां शोभां पश्यद्भिः विद्यार्थिभिः भारतीयवास्तुकलाया अद्भुतानि निदर्शनानि दृष्टानि। राजप्रासादस्य प्रमुखकक्षाणामन्तश्छादानि स्वर्णखचितानि आसन्। भित्तिषु उत्कृष्टकलाप्रतिमानानि भव्यानि चित्राणि अङ्कितान्यासन्। सामान्य राजसभाकक्षे स्वर्णनिर्मितः संवेशः, रजतनिर्मितं च द्वारं राजप्रासादस्य महिमानम् अवर्णयताम्। अनेकानि भव्यानि वस्तूनि

प्रदर्शनार्थं स्थापितान्यासन्। राजपरिवारस्य भव्यानि चित्राण्यत्यन्तमाकर्षकाणि आसन्। अन्तिमस्य मैसूरनरेशस्य तु सम्पूर्णं जीवनमेव चित्राणां माध्यमेन वर्णितमासीत्। राजप्रासादस्यैकस्मिन् भवने प्राचीनैर्मैसूरशासकैः सम्बद्धानां विचित्राणां पुरातनानां वस्तूनां संग्रहः अप्यासीत्।

राजप्रासादात् विद्यार्थिनः कावेरीहैण्डीक्राफ्टनामकं हस्तनिर्मितानां विविध वस्तूनां विक्रयकेन्द्रं गता यत्र चन्दनकाष्ठेन निर्मितानि वस्तूनि, मैसूरस्य कौशेयाः शाटिका, अन्ये च विविधाः पदार्था विक्रयार्थं सुलभा आसन्। अरुणा एकां शोभनां कौशेयशाटिकाम् अक्रीणात्। विद्यार्थिभिरपि इच्छानुसारं वस्तूनि क्रीतानि।

भोजनानन्तरम् अपराह्णे सर्वे वृन्दावनोद्यानं द्रष्टुं गताः। वृन्दावनोद्याने निर्झराणां विस्मापिकां शोभामवलोक्य सर्वेषामेव परिश्रान्तिः कर्पूरतां गता। संगीतस्य आरोहावरोहैः सहारोहन्त्योऽवरोहन्त्यश्च जलधारा नन्दनवनशोभां प्रत्यक्षमकुर्वन्। मनोहारिणि सरोवरे नौकाविहारस्यामोदस्तु सर्वानत्यन्तं पर्यतोषयत्।

मैसूरभ्रमणानन्तरं ते सर्वे बसयानेन ऊटीं प्रति प्रस्थिताः। मार्गे अष्टक्रोश परिमाणमभयारण्यं सर्वेषामौत्सुक्यमवर्धयत्। अभयारण्ये भ्रमतां दन्तिनां परिवारान्, इतस्ततः स्वच्छन्दं प्लवमानानां कृष्णसाराणां, नीलगवां, द्वादश शृङ्गिणाञ्च समूहान् दृष्ट्वा पुलकिताः सर्वे आनन्दमन्वभवन्। अभयारण्ये कस्यचिद् व्याघ्रस्य उपस्थितिं सूचयद् भीतानामिव केषाञ्चित् कुरङ्गाणां प्रपलायनं तेषां कृतेऽत्यन्तं रोमहर्षणमभूत्। अभयारण्यात् निष्क्रम्य तेषां बसयानं मैसूर-ऊटीनगरयोर्मध्ये स्थितं गुडलूरनामकं नगरं प्राप्नोत्। अत एव नीलगिर्याख्या नयनाभिरामा पर्वतमाला सर्वेषां दृष्टिं प्रीणयितुमारभत।

प्रकृत्या मनोरमेषु दृश्येषु मग्ना आनन्दातिरेकेण परस्परं गीतानि गायन्तो यूनो युवत्यश्च ऊटीनगरं प्राप्यात्यन्तमुत्साहिता अभवन्। ऊटीनगरे कावेरी अतिथिगृहे सर्वेषां कृते रात्रिविश्रामस्य व्यवस्थासीत्। बसयानादवतीर्य समवेताः सर्वे कावेरीअतिथिगृहस्य प्रबन्धकैस्तान् सर्वान्नेतुं प्रेषितमन्यद् बसयानम् आरुह्य पर्वतीयं सौन्दर्यं प्रशंसन्तो वार्तामग्नाः शीघ्रमेव कावेरी अतिथिगृहम्प्राप्ताः। भोजनानन्तरं निवृत्तश्रमाः पुनरविकलाः सर्वे पर्वतीयसौन्दर्यस्यानन्दमनुभवितुं प्रचलिताः।

दक्षिणभारतस्य पर्वतीयस्थलेषु ऊटी नीलगिरिपर्वतस्य राजमहिषी कथ्यते। अस्य पर्वतीयस्थलस्यानिर्वचनीयेन सौन्दर्येण मन्त्रमुग्धा इवानन्दमग्राः पर्यटका विद्यार्थिनः, प्रभुमहोदयोऽरुणा च अधित्यकाभिरावृतं विशालं रमणीयञ्च सरोवरं दृष्ट्वात्यन्तमुल्लसिता नौकाविहारस्यानन्दमन्वभवन्।

अत्रान्तरे विश्रमार्थमस्ताचलम्प्रति प्रस्थितस्य भगवतो मरीचिमालिनः क्षीणः प्रकाशोऽवतमसञ्च तानपि विश्रमार्थमतिथिगृहम्प्रति निवर्तितुं प्रैरयत्। मार्गे सर्वेऽपि आपणे पण्यशालासु विविधानि वस्तुजातानि पश्यन्तो रुच्यनुसारं बन्धुभ्यः चन्दनकाष्ठनिर्मितानि उपहारवस्तून्यक्रीणन्।

अन्येद्युः सर्वे ऊटीनगरस्य विश्वप्रसिद्धं सुदूरं विस्तृतं वनस्पत्युद्यानं द्रष्टुं गताः। तस्मिन्नुद्याने विविधानां वनस्पतीनां जातीनां प्रजातीनाञ्च सौन्दर्यं वैचित्र्यञ्च पश्यतां तेषां मध्याह्नोऽभवत्। मध्याह्नभोजनानन्तरं ते नीलगिरेः डोडाबीटापीक नामकं सर्वोच्चं शिखरं प्रति प्रचलिताः। परं मार्गे एवाकस्मात् मेघाच्छन्नं नभो धारासारमवर्षत्। निरन्तरं प्रवहमानेन वायुना शीतेन च कम्पमाना वर्षाजलेन क्लिन्ना मार्गे सुरक्षितं स्थानमपश्यन्तः सर्वे यथाकथञ्चित् कावेर्यतिथिगृहं प्रत्यावृत्य विश्रान्तिमलभन्त।

वस्त्रपरिवर्तनानन्तरं चायपानं कृत्वैव सर्वे गतश्रमा अभवन्। शीतस्य प्रभावेणारुणायास्तु शिरसि वेदनाजायत। क्रोसीनगोलिकाग्रहणानन्तरमेव सा किञ्चित्सुस्थाभवत्। अत्रान्तरे घण्टिकायाः स्वरेण क्षोभिता इवारुणा चलदूरभाषं कर्णसमीपमानीयावदत् – हंहो,

अपरतः कौण्डकरमहोदयस्य स्वर आसीत् – हंहो, अरुणे, नमस्कारः।

- नमस्कारः। कीदृशो भवान् ? अपि सर्वं कुशलम् ?
- भवत्याः साहाय्यं विना पृष्ठवंशहीन इव न किमपि कर्तुं पारयामि।
- नैवं वदतु। राज्यस्य भाविमुख्यमन्त्रिणो मुखादेतादृशानि वचनानि न शोभन्ते।
- भवती कदा प्रत्यावर्तिष्यते ?
- रामेश्वरं कन्याकुमारीं च गन्तुं सर्वे एव उत्सुकाः सन्ति। तत्पश्चात्, सम्भवतो दिनचतुष्टयानन्तरं, वयं प्रत्यावर्तिष्यामहे।
- भवती शीघ्रमागमिष्यतीति अस्माकं कृते सन्तोषस्य विषयः। भवतीं विना अत्र सर्वमव्यवस्थितमस्ति। भवत्या आगमना

नन्तरमेव सर्वं सुष्ठु भविष्यति। नमस्कार:।

– नमस्कार:। इत्युक्त्वारुणा दूरभाषं व्ययुनक्।

भोजनानन्तरं होरार्धपर्यन्तं विश्रम्य एष समवायो बसयानेन मैसूरनगरात् कोयम्बटूरनगरम्प्रति प्रस्थित:। कोयम्बटूरात् रेलयानेन रामेश्वरम् प्रति प्रस्थानस्य कार्यक्रम आसीत्। यदैष समवाय: कोयम्बटूरम्प्राप्नोत् तदा उक्तरेलयानस्य प्रस्थानकाले होराद्वयमवशिष्टमासीत्। कोयम्बटूरं व्यापारस्य केन्द्रं वर्तते। अत्रत्यानि सिद्धानि क्षौमवस्त्राणि न केवलं सम्पूर्णे देशे अपितु विदेशेष्वपि प्रसिद्धानि सन्ति। सर्वे आपणात् स्वसम्बन्धिभ्य: क्षौमवस्त्राणि अक्रीणन्। रात्रिभोजनानन्तरं रेलयानेन सर्वे रामेश्वरम्प्रति प्रस्थिता:। प्रात:काले सूर्योदयात्पूर्वं सूर्योदयदृश्यं द्रष्टुं एष समवायो रामेश्वरस्य प्रतिष्ठिते स्थाने सागरतटे उपस्थित आसीत्।

पूर्वस्यां दिशि भगवतो विवस्वत आगमनं संसूचयन्ती अग्रदूती इव अरुणा आभा दिवं व्याप्नोत्। सुदूरं क्षितिजे शनै: शनै: सागरादुद्गच्छन्तं विशालम् अग्निपिण्डमिव उदयमानस्य भगवत: तिमिररिपोर्बिम्बं मन्त्रमुग्धानामिव जनानां मनांसि उल्लासेनापूरयत्।

अत्रैव भगवान् श्रीरामो लङ्काक्रमणात् पूर्वं विजययज्ञमकरोत्। पाषाण शिवलिङ्गाभावे बालुकापिण्डे एव मनसा शिवलिङ्गस्य प्राणप्रतिष्ठां कृत्वा श्रीरामो महादेवमाराधयत्। उत्तरवर्तिनि काले तत्र भगवतो महादेवस्य शिवस्य भव्यं मन्दिरं निर्मितमभवत्। विशालस्यास्य मन्दिरस्य प्रदक्षिणया श्रद्धालवो भक्ता वैकुण्ठस्याधिकारिणो भवन्तीति जना मन्यन्ते। मन्दिरस्य परिक्रमामार्गे द्वाविंशति तीर्थस्थानानि सन्ति।

मन्दिरस्य परिक्रमामार्गे निर्मितेषु द्वाविंशतिसंख्यकेषु जलकुण्डेषु द्वाविंशति तीर्थानां जलं श्रद्धालूनां भक्तानां स्नानार्थमुपलब्धमस्ति। महालक्ष्मी–सावित्री–गायत्री–सरस्वती–माधव–गन्धमादन–कलाक्ष–कलाय–नल–नील–चक्र–शंख–ब्रह्महत्याविमोचन–सूर्य–चन्द्र–गंगा–यमुना–गया–सान्ध्यामृत–सर्वतीर्थ–शिवतीर्थ–कोटितीर्थनामकेषु एषु जलकुण्डेषु स्नानं मोक्षदायकं मन्यन्ते। डॉ. प्रभुमहोदय:, अरुणा, सर्वे विद्यार्थिनश्च एषु कुण्डेषु स्नानानन्तरं मन्दिरे भगवत: पूजनं विधाय कृतकृत्या अभवन्। विशालाकारे भव्ये मन्दिरे स्थापितस्य शिवलिङ्गस्य पूजयात्यन्तमुल्लसितारुणा भगवत: कृपाप्रसादेन आत्मनो जीवनं

धन्यममन्यत। एवं भगवतः पूजां सम्पाद्य परिक्रमामार्गे निर्मितानामनेकेषां भव्यानां मन्दिराणां दर्शनेन चात्मानं धन्यं कृत्वा एष समवायः एकस्मिन् भोजनालये भोजनमगृह्णात्। तदनन्तरं सर्वे तत्रत्यानि भव्यानि स्थानानि द्रष्टुं निर्गताः।

समुद्रोपरि निर्मितं रेलयात्रामार्गं दृष्ट्वा सर्वेऽपि विस्मिता अभवन्। सागरस्यैकस्मिन् भागे रेलयानस्य गमनागमनार्थं एकः सेतुः निर्मितोऽस्ति। रेलयाने आसीना यात्रिणो यदा तेन मार्गेण रेलयात्रां कुर्वन्ति तदा गर्जतः सागरस्य उत्तालैस्तरङ्गैर्विनिर्धूतानां जलविप्रुषां स्पर्शेणातङ्किताः पुलकिताश्च जायन्ते। समुद्रोपरि निर्मितस्याद्भुतस्यैतस्य रेलमार्गस्यैतद् वैचित्र्यमस्ति यदेष समुद्रमार्गेण गच्छतां विशालानां जलपोतानां गमनागमनकाले तेभ्यो मार्गं प्रदातुमुद्घाटितो भवति, तदनन्तरं च पुनः सुष्ठु पूर्ववत् जायते। रेलयानानां गमनागमनञ्च निर्बाधं भवति।

लक्ष्मणतीर्थं रामझरोकास्थानञ्च वास्तुकलाया निदर्शने स्तः। रामझरोका स्थाने एव भगवतः श्रीरामस्य विभीषणस्य च प्रथमः समागमो बभूव। अत्रैव विभीषणः श्रीरामं सङ्केतेन लङ्काया दिशामदर्शयत्। अस्मात् स्थानादारभ्य लङ्कापर्यन्तं सागरमार्गे अद्यापि व्याप्ताः पाषाणशिला भगवतः श्रीरामस्य वानरसेनया निर्मितं सेतुं स्मारयन्ति।

भव्यानां मन्दिराणां विशिष्टस्थानानाञ्च दर्शनं कुर्वतां तेषां सम्पूर्णो दिवसो व्यतीतः। एष समवायो भगवतो भास्करस्यास्ताचलयात्रां द्रष्टुं सागरतटे प्रतीक्षारतोऽभवत्।

अत्रान्तरे पश्चिमस्यां दिशि सम्पूर्णमन्तरिक्षमरुणयाभया पूरितमभवत्। सागरस्योत्ताला जलतरङ्गा अग्नितरङ्गा इवाभासन्त। पश्यतां सर्वेषां विशालः अग्निपिण्ड इव भगवान् दिवाकरो जलमग्नो भवन्निवास्तङ्गतः।

रामेश्वरतीर्थस्य यात्रा बाल्यादेवारुणायाः स्वप्न आसीत्। तस्या महिम मण्डितस्य पुण्यवतोऽस्य पावनस्थलस्य अदम्या दर्शनेच्छा अद्य साकारतां गता इत्येतदरुणाया आनन्दस्य विषय आसीत्।

रात्रिभोजनानन्तरं सज्जीभूताः सर्वे रेलयानेन रामेश्वरतीर्थस्थानात् कन्या कुमारीम्प्रति प्रस्थिताः। कन्याकुमारी अस्य समवायस्य यात्राकार्यक्रमस्यान्तिमम् अयानमासीत्। अन्येद्युः प्रातः कन्याकुमारीम्प्राप्य स्नानादिकार्येभ्यो निवृत्ता,

अल्पाहारञ्च गृहीत्वा स्टीमरयानेन सर्वे स्वामिविवेकानन्दस्य तपःस्थलीं सागरजलमध्ये स्थितां विवेकानन्दरॉकनाम्ना प्रथितां शिलाम्प्राप्ताः। विशालाकारायां तस्यां शिलायां विवेकानन्दस्मारकं निर्मितमस्ति। भव्यमेकं सभागारं, तस्य मध्ये च स्वामिनो विवेकानन्दस्य पूर्णपुरुषाकारा प्रतिमा स्थापितास्ति। स्वामिनो विवेकानन्दस्य साहित्यं तत्रोपलभ्यते। सूर्योदयस्यदृश्यमत्र रामेश्वर तीर्थस्थानादप्यधिकं मनोहरं भवति।

केचन विद्यार्थिनो डॉ. प्रभुमहोदयोऽरुणा च स्वामिविवेकानन्दस्य कतिचित् पुस्तकान्यक्रीणन्।

स्वामिविवेकानन्दरॉकनाम्न्याः शिलायाः समीपमेव समुद्रमध्ये तमिलनाडु सर्वकारेण राष्ट्रियसंस्कृतेः कर्णधारस्य महाकवेः तिरुवल्लवरस्य पञ्चाशन्मनुष्य पादपरिमाणा उन्नता विशालाकारा प्रस्तरप्रतिमा सुदृढे प्रस्तरमञ्चे स्थापितास्ति।

स्टीमरयानेनैव ततः प्रत्यावृत्यैष समवायः कन्याकुमारीमन्दिरस्य शोभां द्रष्टुं गतः। कन्याकुमारीमन्दिरे प्रवेशार्थं निश्चिताः सन्ति केचन परिधाननियमाः। युवतीनां कृते शाटिकाथवा शाटिकासदृशस्य वस्त्रस्यापरिहार्यतासीत्। जीन्स धारिणीभ्यो युवतिभ्यो मन्दिराद्बहिरेव शाटिकानां व्यवस्थासीत्। पुरुषाणां कृते केवलमधोवस्त्रस्यैव धारणमपरिहार्यमासीत्। अरुणा तस्मिन् दिने शाटिकायाम् एवासीत्। अन्याः सर्वा युवत्यो निर्धारितं राशिं दत्त्वा शाटिकां प्राप्य, शाटिकाधारणानन्तरमेव कन्याकुमारीमन्दिरस्यान्तरङ्गे भागे प्रवेशम् अलभन्त। एवमेव डॉ. प्रभुमहोदयः सर्वे युवानश्च केवलमधोवस्त्रं परिधाय प्रवेशं प्राप्तुमशक्नुवन्।

कन्याकुमारीमन्दिरं कलाया अद्भुतं निदर्शनमस्ति। अति भव्येऽस्मिन् मन्दिरे देव्या दर्शनानन्तरं सर्वे मन्दिरस्य पृष्ठभागे सागरतटम् आगताः। अत्र हि हिन्दमहासागरारबसागरखाडीबंगालसागराणां संगमस्थलत्वादेतत्समुद्रान्तं सागरत्रिवेणीरूपेण प्रख्यातमस्ति। अत्र स्नानेन पुण्यलाभं श्रुत्वा केचन विद्यार्थिनः त्रिवेणीजलस्नानेनात्मानं निष्पापमकुर्वन्। अन्येत्वाचमनमार्जनादिना एव आत्मानं समतोषयन्।

कन्याकुमार्यां सागरतटस्य सूर्यास्तदृश्यमपि मनोहारि भवति। तद्दिदृक्षया सायम्पर्यन्तं तत्रैवावस्थितेर्निर्णय आसीत्। सर्वे एकस्मिन् भोजनालये भोजनम् अकुर्वन्। डॉ. प्रभुमहोदयः त्रिभिर्विद्यार्थिभिः सह रेलयानानामास्थानं गत्वा

द्वात्रिंशत् स्थानान्यारक्षितान्यकारयत्। आपणेषु भ्रमद्भिः सर्वैरपि रुच्यनुसारं कानिचिद्वस्तूनि क्रीतानि। एष तेषां यात्राया अन्तिमो दिवस आसीत्। एवं भ्रमणस्यानन्दे मग्नानां तेषां सन्ध्यासमयः समुपस्थितः।

सागरतटे स्थिताः सर्वे जलनिधौ लीयमानमग्निपिण्डमिव भगवन्तम् आदित्यमस्तं गच्छन्तमपश्यन्। अनेके विद्यार्थिनः सूर्यास्तमनस्य मनोहारि अविस्मरणीयञ्चैतद्दृश्यं मोबाइलकैमरास्वरक्षन्।

अस्तं गच्छन् तिमिरसागरमुल्लङ्घ्य च प्रतिदिनं पुनरभ्युदयं प्राप्नुवन् भगवान् सविता सांसारिकान् जनान् कठिनास्वप्यवस्थासु धैर्येण पुनर् अभ्युदयाशया, अव्यग्रतया, अकातरतया च संघर्षपूर्वकं जीवनाय प्रेरयति। प्रत्येकं निशाया अन्तस्तु भविष्यत्येवेति दुःखान्धकारान्नैव भेत्तव्यमित्युपदेशम् अवगम्यारुणा परां शान्तिमलभत।

एकस्मिन् प्रवासीयगृहे रात्रिं व्यतीत्य प्रातः सूर्योदयात् पूर्वमेव रेलयानेन मुम्बईमहानगरीम्प्रति प्रस्थित एष समवायः।

इति पञ्चम उच्छ्वासः

## अथ षष्ठ उच्छ्वासः

अरुणाया मुम्बईमहानगरीं प्रत्यागमनसमये कौण्डकरमहोदयः चांदभाई महोदयश्च रेलवे आस्थाने एव तस्या अभिनन्दनार्थमुपस्थितौ आस्ताम्। कौण्डकरस्य कार्यालयेऽहमहमिकया समर्थकैः सह स्वपक्षं दृढं कर्तुम् उपस्थितानां निर्वाचनेषु टिकटार्थिनां समूह उपस्थित आसीत्। पुष्पगुच्छैः सहारुणाम् अभिनन्दयतामपि तेषामुद्देश्यं तु तां कौण्डकरञ्च प्रसाद्य प्रत्याशित्व प्राप्तिरेवासीत्। अरुणाया आगमनेन कौण्डकरमहोदय आत्मानमत्यधिकं सशक्तमन्वभवत्।

निर्वाचनयुद्धस्य क्रियाविधिं, सर्वेषां भूमिकाञ्च निश्चेतुं गुप्तमन्त्रणार्थं रात्रिकाले चांदभाईमहोदयेन कौण्डकरमहोदयस्यारुणायाश्च एको विशेषः समागमोऽभवत्। तस्मिन् समागमे तेषामेवं वार्तालापोऽभूत् –

कौण्डकरः–चांदभाईमहोदय, निर्वाचनेषु भवान् प्रत्याशी भविष्यति, इति तु अस्माभिः निश्चितमेव। कथयतु भवान् पुनः कथमस्माकं सहायतां करिष्यति ?

चांदभाईः –सम्पूर्णे राज्ये चत्वारिंशदधिकं द्विशतं विधानसभाक्षेत्राणि सन्ति। अस्माकं दलस्य प्रत्याशिनः सर्वेष्वपि क्षेत्रेषु निर्वाचनयुद्धे ऽवतरिष्यन्ति। अस्माकं राज्याधिकारस्थापनाय पञ्चाशदधिकं शतं दलस्य सदस्यानां संख्या पुष्कला वर्तते। अस्माकं दलस्य विजेतृषु अत्रभवतां समर्थका अधिकांशं भवेयुर्भवतां विरोधिनश्चासफला एव तिष्ठन्तु, एवंविधो मदीयः प्रयासो भविष्यति।

अरुणा – अहं स्पष्टरूपेण ज्ञातुमिच्छामि कथम्पुनरत्रभवान् नागरिकानस्माकं समर्थकानां दलस्य सदस्यानां पक्षे मतदानाय प्रेरयिष्यति ?

चांदभाईः –मम जनाः सम्पूर्णे राज्ये विस्तृताः सन्ति। ते प्रतिगृहं गत्वा मम निर्देशं जनेषु प्रसारयिष्यन्ति। मम निर्देशमुल्लङ्घ्य अन्यस्य कस्यचिदपि पक्षे मतदानं कर्तुं न कोऽपि क्षमते।

कौण्डकरः–निर्भर्त्सनेन पक्षे मतदानाभावे दण्डसङ्कल्पप्रदर्शनेनानिष्टसूचनेन वास्माकमपयशो भविष्यति। एवं सति अन्यथाप्रभावस्य सम्भावना अपि निरसितुं न शक्यते।

चांदभाईः – नैव नैव, अस्माकं जनाः करबद्धं प्रार्थयिष्यन्ति, परं मम प्रभावेण तेषां करबद्धप्रार्थनामपि आदेशमेव मंस्यन्ते जनाः।

अरुणा – महोदय, भवान् कथयति, भवतां प्रार्थनामपि आदेशमेव मन्यन्ते जनाः। तेषां हृदि व्याप्तं भवद्भ्यो भयमेवात्र कारणं सम्भवति। अधुना भवान् राजनीतिक्षेत्रे पदार्पणं कर्तुं प्रवृत्तः। अस्माकं दलस्य प्रत्याशी भूत्वैव भवान् निर्वाचनेष्ववतरिष्यति। यथा हि पूर्वमपि अस्माभिः विमृष्टं यद् भयस्थाने सुरक्षाभावेन बन्धुत्वभावेन च प्रेरिता जना अस्माकं पक्षे मतदानं कुर्वन्तु। यत्सत्यं, भ्रष्टाचरणस्य दादावादस्य चोन्मूलनमस्माकं लक्ष्यं भवितुमर्हति। निर्वाचनेषु विजयं प्राप्य दादावादञ्च परित्यज्य भवान् अन्यैः राजनीतिज्ञैः स्पृहणीयमादर्शं जीवनं धारयितुं शक्नोति। भयस्थाने भवताम् उपस्थितिः सुरक्षाभावस्य बन्धुत्वभावस्य च प्रत्यायिका भवेत्। यदि भवान् दादावादं परित्यज्य एवंविधं पन्थानमनुयाति तदा भवतः अस्माकं दलस्य च यशः सर्वत्र प्रसरिष्यति। अत्रभवतां जनानामुपस्थितौ न कस्यापि कृते कोऽपि भयहेतुर्भवेत्, भवतां नाम एव सुरक्षाया बन्धुत्वभावस्य च पर्यायो भवेत्। भवतां जनानामुपस्थितौ समाजे नारीणां सम्मानः सुरक्षितस्तिष्ठेत्।

[illegible]ः – आर्ये, यदि भवती एवमिच्छति, एवमेव भविष्यति। वस्तुतोऽहमपि एतादृशीं कुत्सितां जीवनशैलीं परित्यज्य भयरहितं सुरक्षितं सामाजिकं जीवनं जीवितुमिच्छामि। वयं तु राजनीतिज्ञानां सेवकाः। स्वामिनां राजनीतिज्ञानां आज्ञानुपालनमेवास्मादृशानाम् अपराधिजगतो गणाधिपतीनां धर्मो भवति। भवादृशी राजनीति धुरंधरा यदि अस्माकं सकारात्मकमुपयोगं वाञ्छति, अत्यधिकं

प्रशस्यम् एतत्। मम शक्त्या एवंविधेन प्रयोगेण यदि राजनीतिक्षेत्रे साफल्यं सम्भवति तदा न किमपि कारणमन्यथाचरणस्य।

अरुणा – उचितमुक्तमत्रभवता। अधुना एतन्निश्चितं यन्निर्वाचनेषु स्वशक्त्याः सकारात्मकेन प्रयोगेण युक्तो भवान् निर्वाचनयुद्धेऽवतरिष्यति, अस्माकं दलस्य च सहायतां करिष्यति।

कौण्डकरः–अतिसुन्दरमेतत्। शक्त्याः सकारात्मकेन प्रयोगेण सर्वेषामेव कल्याणं भविष्यति। एवमद्यास्माकमेष समागमोऽत्यन्तमुपयोगी स्थास्यति।

चायपानानन्तरं विसृष्टस्तेषामेष समागमः।

अद्य दलस्य कार्यकारिण्या विशेषः समागम आसीत्। केन्द्रीयनेतृत्वस्य निर्देशेन कौण्डकरमहोदयः अध्यक्षासने उपविष्ट आसीत्। केन्द्रीयनेतृभिर्नियुक्तौ द्वौ पर्यवेक्षकावपि अध्यक्षेन सहैवोपविष्टौ आस्ताम्। कौण्डकरस्य सचिवरूपेण स्थितापि अरुणा तत्रोपस्थितेषु जनेषु अत्यन्तं महत्त्वपूर्णा व्यक्तिरासीत्। प्रान्तीयकार्यकारिण्या अन्येऽपि सर्वे सदस्या आसनेषु उपविष्टा अभवन्।

समागमस्य कार्यसूचीं सर्वेषां मध्ये घोषयन्ती अरुणा अब्रवीत् – अद्यास्माकं समागमे उपस्थितौ अत्यन्तं सम्माननीयौ केन्द्रीयपर्यवेक्षकौ, अत्रोपस्थिताः प्रान्तीय कार्यकारिण्याः सम्माननीयाः सर्वे सदस्याः, समागमस्य अध्यक्षाः कौण्डकरमहोदयाश्च, सर्वप्रथममहमत्रभवद्भ्यः सर्वेभ्योऽपि स्वागतं व्याहरामि। सर्वेभ्योऽपि विधानसभाक्षेत्रेभ्यः प्रत्याशिनां निर्णयार्थमद्यैषोऽस्माकं समागमः। सर्वेषामभ्यर्थिनां प्रार्थनापत्राणि, प्रत्येकम् अभ्यर्थिनो याच्ञायाः समर्थने तैर्दत्तानि कारणानि, तेषां विस्तृतः परिचयः, सर्वं लेख्यपत्रेषु अत्रभवतां समक्षं प्रस्तुतमस्ति। चत्वारिंशदधिकंद्विशतं विधानसभाक्षेत्राणि भवताम् अभिज्ञातानि सन्ति। विधानसभाक्षेत्राणां सूची राज्यस्य मानचित्रञ्चापि अत्रभवतां सम्मुखं प्रस्तुतमस्ति। अधुना भवन्तो यथोचितं विचारयन्तु। एवमुक्त्वारुणा तूष्णीमभवत्।

कौण्डकरमहोदयोऽवदत् – अति महत्त्वपूर्णेऽस्मिन् समागमेऽहमत्रभवताम् अभ्यर्हणीयानां पर्यवेक्षकमहोदयानामन्येषां च सर्वेषां कार्यकारिणीसदस्यानाम् अभिनन्दनं कुर्वन् प्रार्थये यदस्माकं पार्श्वे सहस्राधिकानि टिकटार्थिनां प्रार्थनापत्राणि सन्ति। एतेषु प्रार्थिषु वर्तमानविधानसभायाः सदस्या अपि सन्ति,

राजनीतिक्षेत्रं प्रविविक्षन्तः प्राथमकल्पिका अपि सन्ति, केचन अपराधिजगता सम्बद्धाः कृष्णकर्माणोऽपि विधानसभां जिगमिषन्ति।

सर्वेषामप्यभ्यर्थिनां गुणदोषदृष्ट्या समाजे तेषां प्रतिष्ठां लोकप्रियताञ्च विचार्य सर्वाण्यप्यावेदनपत्राणि त्रिषु श्रेणिषु विभक्तानि सन्ति। राजनीतिशास्त्रे पी-एच.डी. उपाधिना समलंकृता विदुषी अरुणा मम सचिवरूपेणास्मिन् कार्ये मम सहायिकास्थात्। अत्यन्तं कठिनेऽस्मिन् कार्ये डॉ. अरुणायाः साहाय्येनैवाहं सफलोऽभवम्, अतोऽत्रभवतां सर्वेषां समक्षं ताम्प्रति कृतज्ञतां ज्ञापयामि। (उच्चैः स्वरेण करतलध्वनिना सर्वे अरुणायै साधुवादमुदैरयन्) कौण्डकर महोदयः स्ववक्तव्यं निरन्तरमरक्षत् - एष्वभ्यर्थिषु पञ्चाशत् प्रतिशतमस्माकं दृष्ट्या न सन्ति विचारस्य पात्राणि। तेषां प्रार्थनापत्राणि एकत्र प्रचये प्रस्तुतानि सन्ति। अवशिष्टानि प्रार्थनापत्राणि गुणदोषदृष्ट्या द्वयोर्विभागयोरत्रभवतां सम्मुखं विचारार्थं प्रस्तुतानि सन्ति। अधुना सम्माननीया अत्रभवन्तो यथोचितं विचारयन्तु।

तदारुणा गुणदोषदृष्ट्या उत्तमानामावेदकानां प्रार्थनापत्राणां प्रचयात् प्रत्येकं प्रार्थिनो विषये लिखितं विवरणं प्रस्तुवती सदस्यानां सम्मुखं लेख्यपत्राणि अस्थापयत्।

त्रयाणां सदस्यानां विवरणप्रस्तुतेरनन्तरं कौण्डकरमहोदयः पुनरवदत् - अस्मिन् प्रचये पञ्चाशदधिकंद्विशतं प्रार्थनापत्राणि अत्रभवतां विचारार्थं प्रस्तुतानि सन्ति। एषु हि शक्तिशालिनो लोकप्रियाः प्रभावसम्पन्ना आर्थिकदृष्ट्यापि क्षमतासम्पन्ना विश्वस्ता दलस्य समर्पिताः सेवकाः सन्ति। पुनश्चाद्य भ्रष्टाचारपूर्णे समस्तेऽपि समाजे न्यायाचारः, शुचिता, निर्व्यलीकत्वमेतादृशा गुणाः प्रायः दुर्लभाः सन्ति। अस्मिन् प्रचये येषां प्रार्थनापत्राणि सन्ति ते सर्वेऽप्यस्माकमत्यन्तं विश्वसनीयाः सुपरीक्षिता उपयुक्ताश्चाभ्यर्थिनः। अभ्यर्हाणामत्रभवतां सेवायां विचारार्थमेतानि प्रार्थनापत्राणि एकत्र स्थापितानि सन्ति। अभ्यर्थिनां चयनकाले तेषां विजयस्य सम्भावनापि विचारणीया भवति। अनुपयुक्तानि-अपात्राणि यदि दलस्य प्रत्याशिनो भूत्वा निर्वाचनयुद्धेऽवतरन्ति तदा दलस्य स्थितिस्तु निश्चितमेव दयनीया भविष्यति।

एतच्छ्रुत्वात्यन्तं प्रभविष्णुव्यक्तित्वसम्पन्नः कार्यकारिणीसभासदः टिपनिस महोदयोऽवदत् - उचितं कथयति श्रीमान् कौण्डकरमहोदयः। राजनीतिशास्त्रस्य

विदुषी अत्रभवती आर्या अरुणा कौण्डकरमहोदयश्च उभावपि दीर्घानुभवसम्पन्नौ स्तः। आदरणीयैरत्रभवद्भिरनुशंसितानामेवाभ्यर्थिनां प्रार्थनापत्राणि विचार योग्यानि भवन्तु, इत्येष मदीयः परामर्शः।

अत्रान्तरे काजूबादामपिस्तादिभिः शुष्कफलैर्विविधैर्मिष्टान्नैर्पनीरनिर्मितैः सुरसैर्व्यञ्जनैश्च आपूर्णा अत्युत्कृष्टचीनमृदानिर्मिता द्रोण्यः सेवकैः सर्वेषां समक्षं फलकेषु स्थापिताः। उत्कृष्टेषु पिठरेषु उष्णं चायमुत्कृष्टाश्च चषका अपि सेवकैः फलकेषु सज्जिताः। अधुना सर्वे स्वादिष्ठानां व्यञ्जनानामास्वादने चायपाने च लग्ना अभवन्। व्यञ्जनानामास्वादेन विमुग्धा इव च सर्वे हृष्टमानसाः प्रत्याशिनां चयनप्रक्रियायामरुणायाः कौण्डकरमहोदयस्य च सूक्ष्मदृष्टिं प्राशंसन्। अरुणायाः सौन्दर्यं, प्रभावपूर्णं तस्या वाग्वैदग्ध्यं, समक्षं स्थिता व्यक्तीः वशीकुर्वन् इव तस्या अभिव्यक्तिप्रकार, एवमसाधारणतया प्रभविष्णुव्यक्तित्व सम्पन्नारुणा सर्वान्मन्त्रमुग्धानिवाकरोत्। अतः कौण्डकरस्य सचिवमात्रमपि सा अत्यधिकं महत्त्वपूर्णा व्यक्तिरभवत्। एतादृशमवसरं वीक्ष्य कौण्डकर महोदयोऽकथयत् – अत्रभवन्तो जानन्त्येव यद् राजनीतिशास्त्रे निष्णाता अत्यन्तं लोकप्रिया च आर्या अरुणा भाषणकलायामत्यन्तं निपुणास्ति। यदि दलस्य प्रत्याशिनी भूत्वा सा निर्वाचनयुद्धेऽवतरति, न केवलं निश्चितरूपेण सा जेष्यति अपितु अन्येषामपि प्रत्याशिनां क्षेत्रेषु उपस्थिता स्ववाक्कौशलेन सर्वेषां प्रबुद्धजनानां, राज्यस्य महिलावर्गस्य च विशेषतो मतानि आकर्ष्टुं शक्नोति। आर्यायाः प्रार्थनापत्रमेतस्मिन् प्रचये नास्ति, परं यदि भवन्तोऽनुमन्यन्ते तदा एषा भवद्भिः प्रस्तावितात् क्षेत्राद् अस्माकं दलस्य प्रत्याशिनी सम्भवति।

एतच्छ्रुत्वारुणावदत् – महोदया, अहं तु राजनीतिशास्त्रस्य प्राध्यापिका अस्मि। यद्यपि अभ्यर्हाणां कौण्डकरमहोदयानामुपकारैर्बद्धा सचिवरूपेण तेषां, तेषां दलस्य च साहाय्यार्थं सदैव तत्परा स्थास्यामि, परं क्रियात्मकरूपेण राजनीतिक्षेत्रेऽवतरणविषये न मया कदापि चिन्तितम्। अतोऽस्मिन् विषये कृपया मां क्षमन्तामत्रभवन्तः।

अरुणायाः कथनं श्रुत्वा केन्द्रीयपर्यवेक्षकयोरेकोऽवदत्–महोदये, प्रायः दलस्य प्रत्याशित्वप्राप्त्यैरभ्यर्थिनः प्रार्थनापत्राणि प्रस्तुवन्ति, परं कदाचित् दलस्य हिताय दलस्य नेतृत्वमपि काँश्चित् महिमशालिनो जनान् प्रत्याशित्वाय प्रार्थयते। अद्य च दलस्य नेतृगणः प्रत्याशित्वाय अत्र...

दलस्य हिताय भवत्या स्वीकरणीय एष प्रस्तावः। एवमत्रभवत्याः प्रत्याशित्वं तु अस्माभिर्निश्चितम्। केवलं स्थानविषयको निर्णयोऽवशिष्यते।

सर्वैरपि करतलध्वनिना पर्यवेक्षकमहोदयस्यैष निर्णयोऽभिनन्दितः। अरुणा च सस्मितं शालीनतया करबद्धा भूत्वा एतं निर्णयं शिरोधार्यमकरोत्।

अधुनारुणाधिकतरं महत्त्वपूर्णा व्यक्तिर्भूत्वा प्रत्याशिनां चयनप्रक्रियायां कार्यकारिणीसदस्यानां साहाय्यमकरोत्। अरुणाया वैचक्षण्येन प्रभाविताः सर्वे सदस्याः, पर्यवेक्षकौ च तया प्रस्तुतानां प्रत्याशिनां नाम्नां समर्थने एव याथार्थ्यम् अपश्यन्।

चांदभाईमहोदयस्य वास्तविकं नाम चन्द्रप्रकाश आसीत्। अनेनैव नाम्ना तस्यावेदनपत्रं तत्र स्थापितमासीत्। तस्य प्रार्थनापत्रे विचारार्थं प्रस्तुते सभासदां मध्ये मतभेदः समुपस्थितः। चन्द्रप्रकाशस्यापराधमयीं पृष्ठभूमिं ज्ञात्वा सदस्याः तस्य प्रत्याशित्वविषये स्वकीयां शङ्कां प्रादर्शयन्। कौण्डकरमहोदयोऽपि आत्मनोऽवस्थितिं विचिन्त्य चन्द्रप्रकाशस्य समर्थने न किमपि वक्तुमशक्नोत्, अपितु अन्यैः सह सम्मतोऽभवत्। केन्द्रीयपर्यवेक्षकावपि चन्द्रप्रकाशस्य प्रत्याशित्वेऽसहमतिमदर्शयताम्।

इदानीम्पर्यन्तमस्मिन् विषये निरपेक्षभावेन तूष्णीं स्थितारुणाकथयत् - अभ्यर्हणीया अत्रभवन्तः सर्वेऽपि दीर्घानुभवसम्पन्नाः प्रज्ञावन्तो मनीषिणः। अनुज्ञा चेत् किञ्चिन्निवेदयामि। उभावपि पर्यवेक्षकौ युगपदेवावदताम् - निस्सङ्कोचभावेन कथयतु अत्रभवती।

अरुणा पुनरकथयत् - मम दृष्ट्या चन्द्रप्रकाशस्य प्रत्याशित्वे न कापि हानिः, अपितु लाभ एव। चन्द्रप्रकाशो निर्वाचनयुद्धेऽवतरितुं कृतनिश्चयः। यदि सोऽस्माकं दलस्य प्रत्याशी न भवति तदा अन्यत् किमपि राजनीतिकदलं तं स्वप्रत्याशिनं विधास्यति। राजनीतिशास्त्रस्य महान् आचार्यश्चाणक्यः कथयति यद्राजनीत्यां कूटनीतिकः प्रयोगो ऽनिवार्यो भवति। केवलं सारल्येन राजनीतिक्षेत्रे सफलतायाः सम्भावना क्षीणा एव भवति। कण्टकेभ्यो विमुक्त्यर्थं कण्टकस्य अपरिहार्यता आचार्यवरेण चाणक्येन प्रतिपादिता। अतः सकारात्मकप्रयोगार्थम् एकः कण्टकोऽप्यवश्यं रक्षणीयः। चन्द्रप्रकाशो मम समक्षं सम्प्रत्यजानात् यत् राजनीतिक्षेत्रं प्रविश्य स स्वशक्त्याः केवलं सकारात्मकं प्रयोगं विधास्यति। हिंसापूर्णस्यापराधमार्गस्य साकल्येन परित्यागस्तेन दृढं प्रतिज्ञातः। एवम्

एकतस्तु अस्माकं शासनं शान्तिपूर्णं स्थास्यति, पुनश्च वयं दुष्टस्वभावमपराधिनं सन्मार्गगामिनं विधास्यामः।

चन्द्रप्रकाशः शक्तिसम्पन्नोऽस्ति। तस्य जनाः सम्पूर्णे राज्ये प्रसृताः सन्ति। ते हि सम्पूर्णे राज्ये प्रतिगृहं गत्वा मतप्राप्त्यर्थं करबद्धं प्रार्थयिष्यन्ते। हिंसायाः प्रयोगं विनैव तस्योपस्थितिमात्रेण प्रजाजना अस्माननुयास्यन्ति। यदि पुनर् वयं तमस्माकं दलस्य प्रत्याशिनं न विदध्मः, तदास्माकं स्थितिर्विपरीता भविष्यति। स हि कस्यचिदन्यस्य दलस्य, स्वतन्त्रो वा प्रत्याशी भूत्वा राजनीतिक्षेत्रं प्रवेक्ष्यति। प्रबुद्धैः राजनीतिज्ञैराज्ञाकारिणः शक्तिशालिनो दण्डधारिणोऽवश्यं पालनीयाः। एतादृश एकोऽपि शक्तिशाली दण्डधारी सहायकः कूटनीतिकदृष्ट्या अत्यन्तम् उपयोगी स्थास्यति।

पुनश्च चांदभाईनाम्ना अपराधिजगति प्रसिद्धस्य गणाधिपतेः नाम एव जना जानन्ति, न च तस्य स्वरूपेण परिचिताः सन्ति। चन्द्रप्रकाशनाम्ना समाजे प्रतिष्ठितस्यास्य चांदभाईनाम्ना प्रसिद्धेन गणाधिपतिना अभिन्नतां तु न कोऽपि जानाति। कौण्डकरमहोदयेन, तेषां निर्देशेन मया च सर्वेषामेव अभ्यर्थिनां विषये सम्पूर्णतया अन्वेषणपरीक्षणानन्तरमेवैषा सूची भवतां समक्षं प्रस्तुतास्ति। अतः सम्पूर्णा स्थितिर्भवतां समक्षं निवेदिता। अथच, अपराधिनस्तु राजनीति क्षेत्रेऽपि निरङ्कुशा वर्तन्ते। अस्य नाम अस्माभिः प्रस्तुतम्, अतः सर्वमत्रभवतां समक्षं याथार्थ्येन निवेदितम्। अन्यथा, राजनीतिक्षेत्रे वर्तमानकाले उच्चपदा सीनानामपि नेतृजनानाम् आपराधिकानां व्यापाराणां सम्पूर्णा सूची अन्यस्मिन् लेख्यपत्रेऽत्रैव प्रस्तुता वर्तते। परमस्य लेख्यपत्रस्य अत्रानावरणं तु अन्यमेव विवादं जनयिष्यति। अतः संवृतमेव तिष्ठतु तल्लेख्यपत्रम्।

दलस्य कार्यकारिण्या विशेषेऽस्मिन् समागमे समाचारपत्रप्रतिनिधीनां प्रवेशः पूर्णतया निषिद्धो वर्ततेऽतो मया अत्रभवतां सम्मुखं सम्पूर्णा स्थितिर्व्यक्त रूपेण प्रस्तुतास्ति। शास्त्रदृष्ट्या उपयुक्ततां विचार्य मया स्वमतं प्रस्तुतम्। अधुना भवन्तः प्रमाणम्। इत्युक्त्वा सा तूष्णीमभूत्। अरुणायाः कथनं श्रुत्वा सर्वे दीर्घविमर्शानन्तरं चन्द्रप्रकाशस्य प्रत्याशित्वमन्वमोदन्त।

समागमे उपस्थिताः सर्वे राजनीतिधुरन्धरा अरुणाया वाक्पाटवेन, तस्या ज्ञानेन, राजनीतिक्षेत्रे तस्याः कौशलेन च स्तब्धा आसन्। दीर्घविमर्शानन्तरं सम्पन्ने दिनद्वयपर्यन्तं विस्तृतेऽस्मिन् समागमे प्रायः कौण्डकरमहोदयेन अरुणया

च प्रस्तुतानामेवाभ्यर्थिनां नामानि निर्वाचनस्थानानि च स्वीकृतान्यभवन्।

अन्यस्मिन् दिने समाचारपत्रेषु दलस्य प्रत्याशिनां सूची, प्रत्येकं प्रत्याशिनो निर्वाचनक्षेत्रञ्च प्रकाशितमभवत्। अरुणाया राजनीतिक्षेत्रे सक्रियप्रवेशस्य समाचारो विस्तरेण सचित्रश्च प्रकाशित आसीत्।

अद्य रविवासरोऽस्ति। दक्षिणभारतभ्रमणार्थं गमनात्पूर्वमेवारुणा करुणस्य पार्श्वं गता आसीत्। करुणं द्रष्टुं पिपासिते तस्या अक्षिणी प्रातरारभ्य वात्सल्य स्नेहेन निरन्तरमार्द्रे स्तः। कौण्डकरमहोदयस्यैव कारयानेन सा शिक्षाभारती विद्यालयं प्रति प्रातिष्ठत। मार्गे करुणाय अतिभव्यानि विविधानि क्रीडनकानि, वस्त्राणि च क्रीत्वा तमेव स्मरन्ती सा शिक्षाभारतीविद्यालयं प्राप्ता। अद्यैव प्रायः सर्वेष्वेव समाचारपत्रेषु तस्याश्चित्रं राजनीतिक्षेत्रे तस्याः सक्रियप्रवेशस्य च समाचारः प्रकाशित आसीत्। छात्रावासस्य संरक्षिका करुणाय तस्य मातुश्चित्रं प्रादर्शयत्। तां तत्रागतां दृष्ट्वा स्वागतकक्षे स्थिता युवतिः तस्यै स्वागतवचनं व्याहरन्ती सेविकां करुणं तत्रानेतुमादिशत्।

क्षणानन्तरमेव रुदन्निव 'मम्मा!!!' इत्युच्चरन् करुणो धावन् तस्याः समीपमागतः, सा च, तं गाढं परिष्वज्य वात्सल्यगद्गदा अश्रूणि विमुञ्चन्ती पुत्रस्य मुखं पौनःपुन्येन अचुम्बत्।

अरुणा आनीतानि क्रीडनकानि वस्त्राणि च करुणायादात्। एकैकं क्रीडनकानि वस्त्राणि च उत्सुकतया पश्यन् करुण उल्लसितोऽभवत्। संरक्षिकाया अनुज्ञयारुणा करुणेन सह कारयानेनापणं गता। विविधानि स्थानानि भ्रमन्तौ मातापुत्रौ एकस्मिन् पंचताराभोजनालये मध्याह्नभोजनमकुरुताम्। एवं सन्ध्या पर्यन्तं परस्परं सान्निध्यस्यानन्दमनुभूय करुणञ्च आइसक्रीमोपभोगेन तोषयित्वा सा तं शिक्षाभारतीविद्यालयस्य छात्रावासं प्रापय्य विषण्णवदना इव गृहं प्राप्ता।

रात्रौ कार्यालये कौण्डकरमहोदयोऽरुणा च कार्यकारिणीसमागमे प्रत्याशिनां चयनस्य तेषां निर्वाचनक्षेत्राणां प्रविभागस्य च विश्लेषणमकुरुताम्। सर्वमरुणाया योजनानुसारमेव अभवत्। समागमात् पूर्वमेवारुणा कौण्डकरश्च सर्वाण्येव क्षेत्राणि त्रिषु भागेषु व्यभजताम्। प्रथमे भागे तानि क्षेत्राण्यासन् यत्र विजयः शतप्रतिशतं सुनिश्चित आसीत्। एभ्यः क्षेत्रेभ्यः कौण्डकरमहोदयस्य विश्वस्त तमानामनुयायिनां नामानि प्रस्तुतान्यासन्। द्वितीये भागे तानि क्षेत्राण्यासन् यत्र संघर्षपूर्वकं विजयस्य सम्भावनासीत्। एभ्यः क्षेत्रेभ्यः अनतिक्रान्तमर्यादानां

दलस्य विश्वासपात्राणां नामानि प्रस्तुतान्यासन्। शिष्टेभ्यश्च क्षेत्रेभ्यः अनुभव सम्पन्नानां वयोज्येष्ठानाम् आर्यजनानां नामानि प्रस्तावितान्यासन्। चन्द्रप्रकाशस्य नाम द्वितीये भागे आसीत्। अरुणाया वाक्कौशलेन सर्वं यथाकल्पमभवत्। अधुना कौण्डकरमहोदयस्य मुख्यमन्त्रिपदमत्यधिकं सुरक्षितं प्रत्यैयत।

कौण्डकरमहोदयः स्वमनोभावमरुणां प्रत्यकथयत् – आर्ये अरुणे, भवत्या मम संयोगो मम पुण्योदय एव। भवत्याः सत्परामर्शेन सहयोगेन चाहमेतामुत्कृष्टां स्थितिं प्राप्तः। दलस्य कार्यकारिणीसमागमे भवती एव स्वकीयेन कौशलेन, शास्त्रज्ञानेन, वाक्पटुतया, व्यक्तित्वप्रभावेण च प्रत्याशिनां चयनविषयकमस्माकं प्रस्तावं प्रायः यथानिदेशं पारितमकारयत्। भवत्या राजनीतिकौशलस्यैवायं प्रभावो यन्निर्वाचनेषु भवत्याः प्रत्याशित्वं भवत्याः प्रार्थनापत्रं विनैव सर्वसम्मत्या निर्णीतमभवत्। पुनश्च चांदभाईश्चन्द्रप्रकाशो वा यो ममैव निर्वाचनक्षेत्रात् प्रत्याशित्वाय निर्बन्धशील आसीत्, भवत्या एव प्रभावेण नियन्त्रितोऽभवत्। मम मन्त्रिमण्डले अत्रभवती गृहमन्त्रिपदमलङ्करिष्यति एवं कथयन् कौण्डकरो भावाभिभूतो भूत्वा तामालिङ्गनबद्धामकरोत्। स्मितमवकिरन्ती अरुणा विनम्रतया यथाकथञ्चिदात्मानं बन्धनमुक्तां कारयन्ती अकथयत् – महोदय, भावातिरेकेऽपि मर्यादा रक्षणीया भवति। कौण्डकरोऽकथयत् – हर्षातिरेकण विस्मृतमर्यादोऽहं भवतीं समाश्लिष्यम्, क्षम्यताम्। अरुणा उदतरत् – जानाम्यहमेतत्, परं कार्यालये कदापि कोऽपि आगन्तुं शक्नोति, अतो मर्यादा तु अनतिक्रमणीया एव भवति।

परेद्युः सायंकाले अरुणा कार्यालये उपविष्टा आसीत्। मिष्टान्नसम्पुटकं करयोः धारयन्तं प्रसन्नवदनं चन्द्रप्रकाशं कार्यालयं प्रविशन्तं दृष्ट्वा तस्याभिवादनं स्वीकुर्वती अरुणावदत् – स्वागतमत्रभवद्भ्यः। चन्द्रप्रकाशमहोदय, कुशलवादः, अधुना भवान् भाविविधानसभासदस्यः। आसनं गृह्णातु भवान्।

चांदभाईः – आर्ये, उपकारबद्धोऽहमत्रभवत्याः। जानाम्यहं यद् भवत्या अनुग्रहेण प्रयासैश्च एतत् प्रत्याशित्वं मया प्राप्तम्।

अरुणा सस्नेहं चन्द्रप्रकाशमपृच्छत् – प्रकृत्या सज्जनो विनम्रश्च भवान् कथमस्मिन्नपराधिजगतः कर्दमे पतितः ? पात्रं चेद्भवान् मन्यते कथय सर्वं जीवनस्य रहस्यम्, भवद्विषये जिज्ञासा मामेतत्प्रष्टुं प्रेरयति।

अनेन प्रश्नेन किञ्चिद्व्याकुल इव चन्द्रप्रकाशः कस्यचिदन्यस्य कथामिव

आत्मनः कथां कथयितुमारभत-

अपराधिजगतो गणाधिपतिः चांदभाईः, समाजे चन्द्रप्रकाशनाम्ना प्रसिद्धः भूमिखण्डानां, विशालाकाराणां प्रासादानां, सामान्याकाराणां गृहाणां वा क्रये विक्रये च लग्नः प्रतिष्ठितः कार्ये कुशल उद्योगपतिरस्ति। स हि सर्वेषां सुखेषु दुःखेषु च सहभागी भवति। निर्धनानां विधवानां वृद्धानाञ्च अर्थेन साहाय्यं करोति। प्रतिवेशिनः कदापि कमपि अपराधिसदृशमसामाजिकं जनं तस्य पार्श्वमायातं पार्श्वासन्नं वा नापश्यन्।

महाराष्ट्रियस्य ब्राह्मणपरिवारस्य कुलदीपकस्य चन्द्रप्रकाशस्य पिता एकस्मिन् लघुग्रामे श्रमिकरूपेण कार्यं कृत्वा जीवनमयापयत्। तस्य माता पिता च एकस्मिन् दुर्भाग्यपूर्णे दिने दुर्घटनाग्रस्तौ भूत्वा द्विवर्षदेशीयं चन्द्रप्रकाशम् अनाथं त्यक्त्वा दिवंगतौ। एवमनाथो बुभुक्षितः संरक्षणविहीनो धनहीनश्च चन्द्रप्रकाशो ग्रामवासिनां तथाकथितानां सम्बन्धिनां हिंसापूर्णं पाशविकं व्यवहारं सहमान एकदा ग्रामाद् बहिः राजमार्गे स्थितस्यैकस्य ट्रकयानस्य पृष्ठभागं प्रविष्टो, निद्रावशंगतो भूत्वा च तत्रैवाशेत।

पार्श्वस्थे भोजनालये भोजनग्रहणानन्तरं चालकः ट्रकयानं सञ्चाल्य मुम्बई महानगरीमनयत्। तत्र प्राप्य चालकः ट्रकयानस्य पृष्ठभागे सुप्तं पञ्चवर्षदेशीयं बालकं सुप्तं दृष्ट्वा स्तब्धोऽभवत्।

कस्मात् स्थानादयं बालकः तस्य ट्रकयानं प्रविश्यात्रागतः, तस्य ग्रामो नगरो वा, मातापितरौ, न किमपि सोऽजानात्। किंकर्तव्यविमूढ उद्विग्नः ट्रकयानचालकस्तं बालकं स्वगृहमानयत्, भोजनादिकं च दत्त्वा पत्न्याः परामर्शेन तं नगररक्षिणां पार्श्वमनयत्। अनेकदिवसपर्यन्तं निरन्तरं प्रयासानन्तरम् अपि बालकस्य मातुः पितुः परिवारस्य नगरस्य ग्रामस्य वा विषये किमपि ज्ञातुमक्षमा नगररक्षिणः तं बालकमनाथालयेऽत्यजन्।

मुम्बईमहानगरस्य अनाथालये निवसद्भिः बालकैः सह सञ्चालकस्य अन्येषां च कर्मचारिणां व्यवहारोऽत्याचारपूर्ण आसीत्। वात्सल्यस्थाने अपक्रोशो, वाक्पारुष्यपूर्णस्तिरस्कारश्च, भोजनस्थाने पादप्रहारो मुष्टिकाप्रहारश्च चन्द्रप्रकाशम् अविनेयं, दुराग्रहिणं, स्तब्धमतिञ्चाकुर्वन्। अनाथालयनिवासस्य एको लाभ उल्लेखनीय आसीद् यत्तत्र निवसन् चन्द्रप्रकाशो भाषाज्ञानं गणित ज्ञानञ्चाशिक्षत। निरन्तरमपमानेन प्रताडनेन चात्यधिकं दुःखार्तश्चन्द्रप्रकाश

एकस्यां रात्रौ अनाथालयस्य प्राचीरमुल्लङ्घ्य आत्मानं बन्दिजीवनात् स्वतन्त्रम् अकरोत्। अनाथालयाद्बहिरागत्य चन्द्रप्रकाशोऽथवा चांदोऽयं यदा बुभुक्षितो, भोजनात् पूर्वं प्रहारान् प्राप्नोत्, रात्रौ पदिकमार्गे शयानः प्रहरिभिः विताडितः, बुभुक्षानिवृत्त्यै धनार्जनार्थं तुच्छकार्याणि कुर्वन् एतादृक्षु कर्मसु प्रवृत्तैरन्यैरभिहतो, भिक्षार्थं प्रसारितकरो भिक्षुकैः प्रहृतो, भगवतः प्रसादं प्राप्य क्षुन्निवृत्तिप्रयासे मन्दिराणां तथाकथितैः पण्डितैः तिरस्कृतो, निरन्तरं प्रहारान् सहमानोऽत्यन्तं निष्ठुरो दृढाङ्गश्च अभवत्। लौहनिर्मित इव दृढसन्धिरयं चांदोऽधुना क्रूरस्वभावो हिंसकोऽभवत्। याच्ञां परित्यज्य चौर्ये, बलाद् ग्रहणे वा स औचित्यमपश्यत्। भोजनवस्त्रादीनां पदार्थानां प्राप्त्यै तस्य आक्रामकं स्वभावं ज्ञात्वा भयत्रस्ता जना निर्विरोधं तस्मै भोजनमयच्छन्। चांदः अन्वभवद् यद् भुजबलेनैव सर्वं प्राप्तुं शक्यते। ततश्च भुजबलप्रयोगं कुर्वन् स नगररक्षकैर्गृहीतो न्यायालये प्रस्तुतश्च षण्मासावधिपर्यन्तं कारावासेन दण्डितः।

कारावासेऽपराधिभिः सह तस्य मैत्री अभवत्। तत्रैव स न्यायाचरण पूर्वकं सम्मानसहितञ्च समाजे स्थित्वा अपराधिजगतः क्रियाकलापानां सञ्चालनं कथं क्रियते इति प्रशिक्षणमवाप्नोत्। कारावासाद् बहिरागत्य चांदः अपराधिनां समुदायस्य सदस्योऽभवत्। आक्रामकस्वभावसम्पन्नो बलिष्ठः स स्वयम् आपराधिकेषु कार्येषु प्रवृत्त्यपेक्षया अन्येभ्यः आपराधिकानि कृत्यान्यकारयत्। शनैः शनैः स गणपतिरिव व्यवहर्तुमारभत।

अपराधिसमाजस्य गणाधिपतिर्यदा कारावासाद्बहिरागतः, तेन सह चांदस्य सहवर्तनं दीर्घकालपर्यन्तं सम्भाव्यं नासीत्। समुदायस्य गणाधिपतिरेक एव भवति। एकस्मिन् वने द्वयोः सिंहयोः स्थितिर्न सम्भवति। तयोर्मैत्री शत्रुतायां परिवर्तिता। तयोर्मध्ये द्वन्द्वयुद्धस्य निर्णयोऽभवत्। एकस्मिन् मृते एव अन्यो विजेता घोषितो भविष्यति, सैव हि भविष्यति गणाधिपतिः। पञ्चाशदधिकाः पिण्डीशूरा जघन्यवृत्तयोऽपराधिनः साक्षिभूताः तत्रैकत्र उपस्थिता अभवन्। कस्यापि कृते हस्तक्षेपस्याज्ञा नासीत्। एकस्य चिरन्तनस्य जीर्णदुर्गस्य तमङ्गके एतद्द्वन्द्वयुद्धमभवत्।

चांदस्य लौहमये शरीरे शत्रोः प्रहारा निष्फला असिध्यन्। होरार्धपर्यन्तं निरन्तरं चलितेऽस्मिन्युद्धेऽत्यन्तं क्रुद्धश्चांदः शत्रोर्मस्तके आयसेन मुष्टिप्रहारेण तं धराशायिनमकरोत्, रक्तं वमन्तञ्च तमुत्थाप्य तमङ्गकान्नीचैरपातयत्।

प्रस्तरभूमौ पतितस्तस्य प्रतिद्वन्द्वी शत्रुः तत्कालं मृतः। तत्रोपस्थिताः साक्षिभूताः सर्वे गणसदस्याः चांदं गणाधिपतिमन्वमन्यन्त। तस्मिन्नेव दिने चन्द्रप्रकाशश्चांदः 'चांदभाईः' इति सम्मानितं नाम प्राप्नोत्। एष एव चांदभाईः, मूलरूपेण चन्द्रप्रकाशो दास इवारुणायाः सेवायामनवरतं तत्परोऽस्ति। निर्वाचनयुद्धेऽवतीर्य विधानसभासदस्यताप्राप्तिर्हि अस्य लक्ष्यमस्ति।

चन्द्रप्रकाशस्य कथां श्रुत्वा जातकारुण्या सजलनयना क्षुब्धा चारुणा अकथयत्- अत्यधिकं कष्टावहा भवतां जीवनकथा। परमधुना परिवर्तनस्य काल उपस्थितः। राजनीतिक्षेत्रं प्रविश्य, विधानसभासदस्यो भूत्वा भवान् स्वकीयं जीवनमत्यन्तं उपयोगि कर्तुं क्षमः।

भवत्याः सेवकोऽयं चन्द्रप्रकाशः। क्रीतदास इव भवत्याः सङ्केतमात्रेण प्राणत्यागेऽपि विचिकित्सां न करिष्यति।

चन्द्रप्रकाशमवबोधयन्ती ईषत्स्मयमानारुणा तमवोचत्-चांदभाईः, उपस्थितस्तावद् भवतां परीक्षासमयः। भवतः प्रत्याशित्वमस्माभिर्निश्चितम्, परमस्माकं दलस्य सदस्यानां विशेषतः कौण्डकरमहोदयस्य विजयार्थं यत्किमपि भवान् कर्तुं शक्नोति, नैकोऽपि प्रस्तरोऽपरिवर्तितस्त्यक्तव्यः।

चन्द्रप्रकाश उदतरत् - आर्ये, न भवती मम शक्तिं जानाति, सर्वं भवत्या इच्छानुसारमेव भविष्यति। यदा भवत्या दास्यमेव स्वीकृतं किमियं महानगरी, सम्पूर्णेऽपि महाराष्ट्रे भवत्या इच्छाविरुद्धं न कोऽपि किमपि कर्तुं पारयिष्यति। एषा भवत्या दासस्य प्रतिज्ञा स्थास्यति। एवं कथयन् चन्द्रप्रकाशो नमस्कारं कुर्वन् कार्यालयान्निर्गतः।

गते चन्द्रप्रकाशे प्रवृद्धामात्मनः शक्तिमनुभवन्ती अरुणा परिवर्तितेनात्मनः स्वरूपेणात्मन्येव मुग्धाभवत्!

करुणः शिक्षाभारतीविद्यालयस्य 'शिशु उद्यानम्' खण्डस्य शिक्षां समाप्य प्रथमचरणखण्डे प्रवेशमर्हति। परश्वः शिशु उद्यानम् खण्डस्य वार्षिकोत्सवोऽस्ति। प्रधानाचार्या भारतीवेनमहोदया दूरभाषेणारुणां वार्षिकोत्सवस्याध्यक्षपदमलङ्कर्तुं प्रार्थयत। वार्षिकोत्सवे सांस्कृतिककार्यक्रमे करुणस्य भूमिका अरुणाया अतिरिक्तम् आकर्षणमासीत्। प्रथमखण्डे प्रवेशार्थं पुनरावेदनपत्रस्य प्रस्तुतेरनिवार्यता वर्तते, अतः तस्मिन्नेव दिने आवेदनपत्रमप्यापूरयितुं सारुणां प्रार्थयत।

करुणस्य प्रथमचरणखण्डे प्रवेशो निश्चितमेवारुणाया हर्षस्य विषयः, परं पुनरावेदनपत्रस्य पूर्तिकाले पितुर्नाम्नः स्थानस्य पूर्तिस्तस्याः चिन्तायाः कारणमासीत्।

निश्चिते दिवसेऽरुणा शिक्षाभारतीविद्यालयं गता। वार्षिकोत्सवे सांस्कृतिक कार्यक्रमे अर्जुनस्याभिनयं कुर्वन्तं करुणं दृष्ट्वा अध्यक्षासने उपविष्टा भावाभिभूता हर्षोत्फुल्ललोचना सा करुणस्य मुखात् आत्मविश्वासपूर्वकमत्यन्तं शुद्धमुच्चरितं श्रीमद्भगवद्गीतायाः श्लोकमश्रृणोत्–

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव। इति।

तस्या आत्मजस्य करुणस्य प्रभावपूर्णामभिव्यक्तिशैलीं दृष्ट्वा, असामान्य रूपेण शुद्धञ्च तस्योच्चारणं श्रुत्वा तस्य प्रतिभामनुभवन्त्यास्तस्या अन्तःकरणं गौरवान्वितमाप्यायितञ्चाभवत्। समीपस्था प्रधानाचार्या भारतीवेनमहोदया करुणस्य प्रतिभां प्रशंसन्ती अरुणां कुशलवादमकथयत्।

कार्यक्रमपरिसमाप्तौ प्रधानाचार्यायाः कार्यालये चायपानावसरे भारतीवेन महोदया आवेदनपत्रं प्रयच्छन्ती तत्पूर्त्यर्थमरुणां न्यवेदयत्। प्रसङ्गमुपसंहरन्तीव अरुणाकथयत् – किमेतदावेदनपत्रं पूर्वं प्रस्तुतादावेदनपत्राद्भिन्नमस्ति ? विवरणं तु पूर्ववदेव। हस्ताक्षराङ्कितमेतन्मया, अधुना कार्यालयसचिवः सर्वं पूर्ववत् पूरयिष्यति, एवं वदन्ती स्वहस्ताक्षराङ्कितमावेदनपत्रं प्रधानाचार्यायाः समक्षम् अस्थापयत्। भारतीवेनमहोदया च धन्यवादं व्याहरन्ती तत्पत्रमरक्षत्। करुणोऽपि तत्रैवागतः। वात्सल्येन तं परिष्वज्य चुम्बन्ती चारुणा तस्याभिनयं, तस्य प्रतिभां च प्रशस्य आशीर्वचोभिस्तस्योज्ज्वलभविष्यार्थमकामयत। संरक्षिका करुणं तस्यावासमनयत्। अरुणा च प्रधानाचार्ययानुज्ञाता गृहं प्रतिनिवृत्ता।

निर्वाचनानां तिथयः सन्निकटमागताः। कौण्डकरमहोदयः सर्वानपि प्रत्याशिन आहूय समागमं कृत्वा निर्वाचनप्रक्रियाविषये तानबोधयत्। सम्पूर्णराज्यात् सर्वे प्रत्याशिनस्तत्र उपस्थिता आसन्। प्रचारकार्यार्थं प्रत्येकं क्षेत्रस्य प्रत्याशिने लक्षत्रयं रूप्यकाणां विशालस्य धनराशेर्व्यवस्था दलस्य कोषादासीत्। तस्य राशेर्वितरणं समागमस्य मुख्यं प्रयोजनमासीत्। कौण्डकर महोदयः चन्द्रप्रकाशायापि लक्षत्रयं रूप्यकाण्ययच्छत्। चन्द्रप्रकाशः सधन्यवादम् एतं धनराशिं दलकोषायायच्छत्। चन्द्रप्रकाशः सर्वेषां

कृतेऽपरिचित आसीत्। कौण्डकरमहोदयः समृद्धव्यापारिरूपेण दलस्य निष्ठावत्कार्यकर्तृरूपेण च चन्द्रप्रकाशस्य परिचयमकारयत्। उक्तं राशिमरुणा अप्यगृह्णात्।

अरुणा सम्पूर्णे राज्ये परिभ्रम्य यथासम्भवमधिकतमेषु क्षेत्रेषु गत्वा प्रचारकार्यं करिष्यतीति कौण्डकरमहोदयः सर्वानकथयत्। एतदर्थमरुणायै अतिरिक्तस्य राशेर्व्यवस्था कृता आसीत्। भोजनानन्तरं अपराह्णे चतुर्वादनकाले महत्त्वपूर्णोऽयं समागमो विसृष्टोऽभवत्।

अरुणा राजनीतिशास्त्रस्य प्राध्यापिकापदात् स्वकीयं त्यागपत्रं मुम्बई महाविद्यालयस्य प्रधानाचार्यमहोदयस्य सेवायां प्रास्तौत्। महाविद्यालयस्य सर्वैः प्राध्यापकैः सहितः प्रधानाचार्यः अरुणायै सम्मानस्य प्रतीकरूपेण मध्याह्न भोजनस्य व्यवस्थाम् अकरोत्। सर्वेभ्यः शुभाशंसाः स्वीकुर्वती विदुषी अरुणा महाविद्यालयस्य सेवाकार्यान्मुक्ता भूत्वा सोत्साहं निर्वाचनयुद्धेऽवातरत्।

निश्चिते समये अरुणा, चन्द्रप्रकाशः कौण्डकरमहोदयः अन्ये च सर्वे प्रत्याशिनः सम्बन्धितक्षेत्राणां निर्वाचनकार्यालयेषु अधिकारिणां समक्षं प्रत्याशि रूपेण आवेदनपत्राणि प्रास्तुवन्। शनैः शनैः प्रचारकार्यं तीव्रमभवत्।

भाविमुख्यमन्त्रिरूपेण प्रस्तुतः कौण्डकरमहोदयोऽरुणा च केन्द्रीयनेतृभिः सह सम्पूर्णे राज्ये दलस्य प्रत्याशिनां समर्थने प्रचारार्थमभ्राम्यताम्। अरुणाया वक्तृत्वकलायाः प्रभावं केन्द्रीया नेतारोऽप्यन्वभवन्। स्वकीयान्निर्वाचन क्षेत्रादन्येषु क्षेत्रेषु अरुणा मुख्यवक्तृरूपेण तु न कुत्राप्यासीत्, परं पुनरपि सर्वत्रैव तस्या भाषणानि जना अत्यधिकं तन्मयतया अशृण्वन्। तस्या भाषणकाले मन्त्रमुग्धा इव जना निःशब्दं स्थित्वापि वारं वारमनायासमेव प्रबलेन करतलध्वनिना तस्याः कथनं समार्थयन्त। अरुणायाः स्वकीये निर्वाचनक्षेत्रे तु स्थितिरत्यन्तं विचित्राभवत्। तस्या विरोधिनां जनसभासु जनानामभाव एवं तान् धराशायिनः अकरोत्। एवं प्रत्यैयत यद्जनाः केवलमरुणामेवाशुश्रूषन्त। असाधारणेनारुणायाः प्रभावेण न केवलं विरोधिनः तस्या दलस्य नेतारोऽपि विमोहिता इवाभवन्।

चन्द्रप्रकाशस्य जना अरुणाया आदेशानुरूपं प्रतिगृहं गत्वा दलस्य पक्षे मतदानाय प्रार्थयन्त। यद्यपि चन्द्रप्रकाशस्तस्य जना वा न किमप्यनियतमकुर्वन् तथापि तेषां प्रार्थनामेवादेशं मन्यमाना मतदातारस्तेषां प्रार्थनामन्वगच्छन्। चन्द्र

प्रकाश एव चांदभाईरस्ति इत्यजानन्तो जनाः चन्द्रप्रकाशस्य सौजन्येन, तस्य उदारतया चापि प्रभाविता आसन्।

सम्पूर्णे राज्ये मतदानप्रक्रिया सम्पन्नाभवत्। निर्वाचनपरिणामाः सर्वेषामपि कृते आश्चर्यकारका आसन्। कौण्डकरमहोदयस्य दलं अशीत्यधिकं शतं स्थानेषु विजयि भूत्वाभूतपूर्वां सफलतामवाप्नोत्। कौण्डकरमहोदयः सप्तति प्रतिशतं मतान्यवाप्नोत्। अरुणाया नैकोऽपि प्रतिद्वन्द्वी लग्नकमपि रक्षितुम् अपारयत्। चन्द्रप्रकाशोऽपि विधानसभासदस्यो भूत्वा अरुणाया उपकारेण बद्धोऽभवत्।

कौण्डकरमहोदयस्य नेतृत्वे दलस्य नवनिर्वाचितानां विधायकानां समागमः अभवत्। दलस्य केन्द्रीयनेतारोऽपि प्रेक्षकरूपेण समागमे उपस्थिता आसन्। कौण्डकरमहोदयो निर्विरोधं, सर्वसम्मत्या, नवनिर्वाचितानां दलस्य विधायकानां नेता निर्वाचितोऽभवत्। महामहिमराज्यपालमहोदयो मुख्यमन्त्रिरूपेण शपथ ग्रहणार्थं मन्त्रिमण्डलस्य च संगठनार्थं कौण्डकरमहोदयं न्यमन्त्रयत।

आप्रथमात् दिवसात् विजयं यावत् सम्पूर्णायां निर्वाचनप्रक्रियायामरुणा कौण्डकरमहोदयस्य सहायिका अतिष्ठत्। अधुना मन्त्रिमण्डलस्य संगठन प्रक्रियायामपि सा तथैव तस्य सहयोगिनी आसीत्। अत्यन्तं महत्त्वयुक्तम् एतत्कार्यं निर्बाधं सम्पादयितुं जनसमागमाद् दूरमेकान्ते एकस्मिन् स्थाने कौण्डकरमहोदयोऽरुणा च मन्त्रिणां नाम्नां तेषां विभागानाञ्च निर्णयमकुरुताम्। कौण्डकरमहोदयोऽतिमहत्त्वपूर्णस्य गृहविभागस्य दायित्वं स्वीकर्तुमरुणां सम्प्रार्थयत। अनिच्छन्त्यपि अरुणा कौण्डकरमहोदयस्याग्रहं सममन्यत। परं सा चन्द्रप्रकाशं गृहमन्त्रालयस्याङ्गभूतस्य आन्तरिकसुरक्षाविभागस्य उपमन्त्रि रूपेण मन्त्रिमण्डले परिग्रहीतुं कौण्डकरमहोदयं प्रार्थयत।

कौण्डकरमहोदयोऽस्मिन् प्रस्तावे औचित्यं नापश्यत्। अपराधिजगतः गणाधिपतिः एतादृशस्य महत्त्वपूर्णविभागस्य पात्रं नास्ति इति विचारयन् कौण्डकरमहोदयोऽरुणामपृच्छत् - अपि स्वस्था अत्रभवती ?

सर्वथा स्वस्थास्मि, अत एव एष प्रस्तावः, अरुणा अत्यन्तं दृढतया अवोचत्। आन्तरिकसुरक्षा नगररक्षिभिः अपराधिभिश्च सम्बद्धा भवति। चन्द्रप्रकाशः अपराधिनां सर्वाणि रहस्यानि जानाति। यदि भवान् अपराधिजगतः समूलोत्पाटनं वाञ्छति तदा एकमात्रं चन्द्रप्रकाश इमामभियोज्यतां वोढुं क्षमः।

स एव निष्पत्तिपूर्वं पर्यनुयोगे क्षमः। स एव अपराधिनां कौशलं, तेषां युक्तीः, तेषां कपटञ्च मर्मभेदिरूपेण दीर्घदृष्ट्या जानाति। स हि अपराधिनोऽपराधमार्गाद् अपावृत्य तान् सन्मार्गगामिनः कर्तुं शक्नोति। एवं चन्द्रप्रकाशस्याभियोज्यतायाम् चौर्यं, हिंसा, अपहरणं, बलात्कार एतादृशा अपराधा अत्रभवतः शासनकाले न भविष्यन्ति, भवतः मुख्यमन्त्रित्वञ्च स्थायि स्थास्यति।

विचारमग्नः कौण्डकरमहोदयः स्वकीयां शङ्कामकथयत् – कदाचित् चन्द्रप्रकाशस्योपमन्त्रिपदे आसीने तस्यानुयायिनो निर्भयं निःशङ्कञ्चापराधकार्येषु प्रवर्तेरन्।

अरुणा उदतरत् – अहं चन्द्रप्रकाशमाहूय सुष्ठु विमृशामि। यदि स सन्मार्गन् अनुजिगमिषतः स्वानुयायिनः, तेभ्यः शपथपत्राणि गृहीत्वा, नगररक्षित्वे विनियुज्य तान् अपराधवृक्षस्योन्मूलनकार्ये प्रवर्तयति, तदा आजीविकाप्राप्त्य नन्तरं न केवलं ते सन्मार्गगामिनो भविष्यन्ति, अपितु अपराधिनां, अपराधानां, तेषां क्रियाविधीनाञ्च रहस्यज्ञतया निश्चितमेव तेऽपराधवृक्षं समूलमुच्छेत्स्यन्ति।

कौण्डकरमहोदयोऽकथयत् – युक्तं कथयति अत्रभवती। परं तेषां पूर्वं कृतानामपराधानामितिहासस्य किं भविष्यति ?

अरुणा उदतरत् – विधिशास्त्रानुसारं दोषविस्मरणव्यवस्था वर्तते। तेभ्यो राजक्षमां घोषयित्वा ते सन्मार्गगामिनः कर्तुं शक्यन्ते। राजक्षमां प्राप्यासामान्य मपराधिजीवनं परित्यज्य न केवलमेते प्रसन्ना भविष्यन्ति अपितु समर्पणभावेन स्वनियोगमप्यनुष्ठास्यन्ति।

मन्त्रिमण्डलस्य संगठनविषयं निश्चित्य अर्धरात्रस्य पश्चात् प्रातः द्विवादन समये परिसम्पन्नः कौण्डकरमहोदयस्यारुणायाश्चैष समागमः। सायंकाले पञ्चवादनसमये शपथग्रहणसमारोहस्य कार्यक्रमो निश्चित आसीत्।

विधानसभासदस्यरूपेण निर्वाचितश्चन्द्रप्रकाशोऽपराधिजगतोऽन्ये च गण सदस्या अत्यन्तं प्रसन्ना आसन्। पुष्पमालाभिः सज्जिते विवृते कारयाने स्थितस्य चन्द्रप्रकाशस्य शोभायात्रायां महानगरस्यात्यन्तं सम्मानिता अनेके सदस्या अपि तस्य सम्मानमवर्धयन्। परमुपमन्त्रिपदविषये तु चन्द्रप्रकाशस्तस्य गणसदस्या वा न कदापि व्यभावयन्। प्रातः सप्तवादनसमये अरुणयाहूतश्चन्द्र प्रकाशः स्नानादि कार्याण्यपि परित्यज्य फलानां डलकं मिष्टान्नस्य च द्वौ सम्पुटकौ गृहीत्वा कौण्डकरमहोदयस्य कार्यालयं प्राप्तः।

चन्द्रप्रकाश इदानीं भाविमुख्यमन्त्रिणः कार्यालये राज्यस्य भाविगृहमन्त्रिणः समक्षमुपस्थित आसीत्। किञ्चित्कालं यावदरुणा चन्द्रप्रकाशं निर्निमेषं पश्यन्ती स्थिता। पुनरीषत्स्मितमवकिरन्ती तमब्रबीत् -

आगम्यतां चांदभाईमहोदय, आस्यताम्; स्वागतमत्रभवताम्; कुशलवादः; अत्युत्कृष्टोऽत्रभवतां निर्वाचनपरिणामः; निर्विवादं साधुवादार्होऽत्रभवान्। मुम्बईमहानगरस्य सर्वेष्वपि निर्वाचनक्षेत्रेषु अस्माकं दलस्य प्रत्याशिनां विजयस्य यशसः भवानेव पात्रम्। अत्रान्तरे अरुणाया आदेशानुरूपं सेवकः चायं मिष्टान्नञ्च आनीय फलके पर्यकल्पयत्। अरुणा सेवकं चन्द्रप्रकाशेनानीतौ मिष्टान्नसम्पुटकौ फलानां डलकञ्च कौण्डकरमहोयस्यान्तर्गृहं नेतुमादिशत्।

आर्ये, वस्तुतस्तु सम्पूर्णेऽपि राज्ये अस्माकं दलस्याभूतपूर्वस्य विजयस्य यशसः पात्रं केवलमत्रभवती एव। अहं तु अत्रभवत्या दास एव। समाजे चांदभाईनाम्नाभिज्ञातोऽयं चन्द्रप्रकाशः अद्यारभ्य सहोदरभ्राता इव भवत्याः सेवायां प्रस्तुतः स्थास्यति।

यद्यहमद्य विधानसभासदस्योऽस्मि, इति केवलं तदैव शक्यमभवद् यदा भवती मां प्रत्याशिनमकरोत्। एवं कथयन् चन्द्रप्रकाशः मिष्टान्नेन अरुणाया मुखमपूरयत्। प्रसन्ना अरुणापि स्वकीयेन कोमलकरेण मिष्टान्नं चन्द्रप्रकाशस्य मुखे प्रत्यपादयत्।

अरुणाब्रवीत् - भ्रातः, जानात्येव भवान् यदद्य सायं मन्त्रिमण्डलस्य शपथग्रहणसमारोहो वर्तते। मया कौण्डकरमहोदयस्य सम्मुखमत्रभवते उपमन्त्रि पदमनुशंसितम्। अहं गृहमन्त्री भविष्यामि; गृहमन्त्रालयस्य आन्तरिकसुरक्षा विभागो भवतामनुयोगाधीनः स्थास्यति। भवानस्मिन् विभागे उपमन्त्री भविष्यति।

अत्यधिकमुल्लसितो विस्मितश्च चन्द्रप्रकाशोऽवदत् - आर्ये, न मया कदापि अस्मिन् विषये विभावितम्; न चाहं जानामि कथमेतादृशानि कार्याणि सम्पाद्यन्ते।

अरुणावोचत् - अधुना भवान् न केवलमस्माकं दलस्य विधानसभा सदस्यः, अपितु उपमन्त्रिरूपेण सर्वकारस्याङ्गभूतः शासनव्यवस्थायां महत्त्व युक्तां भूमिकामनुष्ठास्यति। अपराधिजगति येऽपि सन्ति भवतां गणसदस्याः, तान् सर्वानेव नगररक्षिविभागे नियुज्य तेषामुद्धारोऽस्माकं प्रथमं चिकीर्षितम्

अस्ति। राजकीयसेवायां समायुक्तास्ते प्रतिमासं भव्यं वेतनं प्राप्स्यन्ति, अपराधमार्गादपवृत्य सम्मानितञ्च जीवनं यापयिष्यन्ति। न चाधुना भवानपराधि जगतो गणाधिपतिः; भवान् गृहमन्त्रालयस्य, मम मन्त्रालयस्य, आन्तरिकसुरक्षा विभागस्य उपमन्त्री भविष्यति। सम्पूर्णं महाराष्ट्रराज्यम् अपराधमुक्तं कर्तुं यदपि शक्यं तद्भवान् करिष्यति। अस्माकं शासने, चौर्यं, हत्या, अपहरणं, बलात्कारः, एतादृशा घटना न कदापि सम्भवेयुरिति भवताम् अनुयोज्यता भविष्यति। भवानपराधिनां सर्वाणि रहस्यानि जानाति। अस्माकं शासनकालेऽपि यदि वयं राज्यमपराधमुक्तं कर्तुं न पारयामस्तदा विधानसभासदस्यताया मम त्यागपत्रमेव वरम्। अस्मिन् कार्ये भवान् मम सहायको भूत्वा सर्वं कार्यं करिष्यति।

किञ्चिच्चिन्तित इव चन्द्रप्रकाशोऽवदत् – आर्ये, अपराधिजगति सन्त्यनेके गणाः। एषु गणेषु न भवति कोऽपि कस्यापि मित्रम्। मम उपमन्त्रिपदग्रहणानन्तरं तैः सह विरोधस्तु भविष्यत्येव। अस्मिन् कार्ये जीवितमपि शङ्कास्पदं भविष्यति। परं क्रीतदासोऽहमत्रभवत्या आर्यायाः; यदपि भवती आज्ञापयति, तत्करिष्यामि, एषा मे प्रतिज्ञा। इत्येवं विसर्जितस्तयोः समागमः।

मन्त्रिणामुपमन्त्रिणां राज्यमन्त्रिणां च सूचीः दलस्य केन्द्रीयनेतृवराणामनुज्ञां प्राप्य महामहिमशालिनो राज्यपालमहोदयस्य कार्यालयं प्रेषिता। सायंकाले च भव्ये समारोहे शपथग्रहणं सम्पन्नमभवत्। समाचारपत्राणां प्रतिनिधयः, दूरदर्शनस्य प्रायः सर्वासामेव वीथिकानाञ्छायाकाराः तत्र उपस्थिता आसन्।

महाराष्ट्रराज्ये प्रतिवेशिराज्येषु च दूरदर्शनस्य समाचारवीथिकाः शपथग्रहण समारोहं प्रत्यक्षं प्रासारयन्। रात्रौ च सम्पूर्णे देशे दूरदर्शनवीथिकाभ्यः सर्वे भारतीया अमुं समाचारमशृण्वन्, अरुणाञ्च विशेषतया गृहमन्त्रिरूपेण शपथं गृह्णतीमपश्यन्। राजनीतिशास्त्रे पी-एच.डी. उपाधिधारिणी अरुणा प्रथमवारमेव निर्वाचनयुद्धेऽवातरत्। तस्या नैकोऽपि विरोधी लग्नकमपि रक्षितुम् अपारयत्। एतत्तु विशेषरूपेण सर्वैरेव वर्णितमासीत्। अरुणायाश्चित्रं पुनः पुनः दूरदर्शने अदृश्यत। अन्येद्युः समाचारपत्रेषु एष समाचारो विशेषरूपेण प्रकाशित आसीत्। एकस्मिन् समाचारपत्रे 'राजनीतिशास्त्रस्य विदुषी प्राध्यापिका राजनीतिक्षेत्रे' इति शीर्षकेण सम्पादकीयं प्रकाशितमासीत्।

गृहमन्त्रिरूपेण शपथग्रहणानन्तरं नवीनमतिभव्यं राष्ट्रध्वजयुक्तं कारयानं

सुरक्षाकर्मिणश्च तस्याः प्रतीक्षायामासन्। अतिभव्यं प्रासादाकारं विशालं राजकीयमेकं भवनं तस्या निवासाय प्रस्तुतमासीत्। कौण्डकरनिवासस्य उपगृहात् गृहमन्त्रिरूपेण तस्यै सज्जिते तस्मिन् भवने निवासस्य प्रस्तावे समुपस्थिते भावाभिभूता अरुणा प्रथमं कौण्डकरमहोदयस्य दर्शनार्थं मुख्यमन्त्रि निवासं गता।

मुख्यमन्त्रिनिवासेऽत्यन्तं भावाभिभूतौ कौण्डकरमहोदयोऽरुणा च, द्वावपि परस्परं न किमपि कथयितुमपारयताम्। कौण्डकरमहोदयस्य उपकारैर्बद्धारुणा तम्प्रति अत्यधिकं विनम्रा कृतज्ञा चासीत्। कौण्डकरमहोदयश्च प्राप्तमिदं मुख्यमन्त्रिपदमरुणाया एव प्रसादममन्यत। उभयोरपि सजले नयने किमप्यनूच्य अपि परस्परं कृतज्ञतामज्ञापयताम्। मुख्यमन्त्रिणा कौण्डकरमहोदयेन अनुज्ञाता अरुणा मुख्यमन्त्रिनिवासस्य समीपे एव स्थिते गृहमन्त्रिनिवासे स्थानान्तरणं व्यधात्। भवनस्य द्वारे 'डॉ. अरुणा गृहमन्त्री' इति नामपट्टमरुणामभ्यनन्दयत्।

नवमिमं राजकीयनिवासमागत्यारुणा करुणं तत्रानेतुमुत्सुकाभवत्। सोऽप्येकवारं नवमेतत्परिवर्तनं पश्यतु, इति चिन्तयन्त्या अरुणाया स्मृतयो विगतजीवनस्य वीथिषु भ्रमन्त्यस्तामनायासमेव भावप्रवणामकुर्वन्। प्रमोदस्तस्यात्यधिकं घृणापात्रमस्ति, परं स एव तस्याः स्मृतिषु वारं वारमागत्य तां विचलितां करोति। अमेरिकावासिन्याः कन्यायाः पितुः सम्पत्तिं प्राप्तुं स तां वञ्चयित्वा गतः, पुनस्तयैव वञ्चितः स्वदेशं प्रत्यावर्तितः। कितवेन तेन विप्रलब्धा सा गृहं त्यक्त्वा अत्रागता। सम्भवतः करुणस्यैव भाग्येनाद्य गृहमन्त्रिपदे आसीनास्ति। अत्यधिकं शक्तिसम्पन्ना साद्य यदि इच्छेत्, प्रमोदं यथाकल्पं मृत्युनापि दण्डयितुं क्षमते। अन्यस्मिन् क्षणे साचिन्तयत् - प्रमोदस्तस्य पुत्रस्य पितास्ति, मातृत्वस्य गौरवमपि स एव तस्यै अयच्छत्। अतो घृणापात्रमपि स मृत्युदण्डं तु नार्हत्येव। वस्तुतस्तस्या हृदि कुत्रचित् प्रमोदोऽद्यापि वसति। माता, पिता, पितृष्वसा, सर्वान् स्मारं स्मारं साश्रूणि व्यमुञ्चत्। अत्रान्तरे दूरभाषस्य घण्टिकाशब्दस्तां यथार्थलोकमानयत्। अपरतः साश्रृणोत् - हंहो, अहं शिक्षाभारतीविद्यालयस्य प्रधानाचार्या भारतीवेनास्मि। गृहमन्त्रिरूपेण भवत्याः शपथग्रहणं दृष्ट्वा वयं सर्वे प्रसन्नाः स्मः। साधुवादार्हा तत्रभवती। करुणः शपथग्रहणसमारोहस्य प्रत्यक्षप्रसारणं दूरदर्शनेऽपश्यत्।

अरुणा उदतरत् - आर्ये, अहं भवत्या उपकारेण बद्धास्मि। करुणस्य

शिक्षाभारस्तत्रभवत्या स्वीकृतः, अत एवाहमेतत्सर्वं कर्तुमपारयम्। मम मनः करुणं द्रष्टुमिच्छति।

प्रधानाचार्याकथयत् – युक्तं कथयति तत्रभवती। विद्यालये ग्रीष्मावकाशः समारब्धः। अद्य हि अन्तिमः कार्यदिवसोऽभूत्। भवत्याः कार्यव्यापृततया न मया पूर्वमस्मिन्विषये सूचितम्। अधुना एकमासपर्यन्तं स भवत्याः पार्श्वे एव स्थास्यति। इदानीं भवत्या पूर्वभुक्तिं जानामि। यदि भवती कथयति तदाहं स्वयं तं भवत्याः पार्श्वं प्रापयेयम्।

अरुणाकथयत् – पुनरत्यन्तं कृतज्ञा स्थास्यामि। अहं सुरक्षाकर्मिभिर्युक्तं कारयानमधुनैव प्रेषयामि। अहं तत्रभवत्याः स्वागतार्थमुत्सुकास्मि।

होराद्वयानन्तरं प्रधानाचार्या भारतीवेनमहोदया अरुणया प्रेषितेन कारयानेन करुणेन सह अरुणाया राजकीयं प्रासादं प्राप्ता। करुणो नवीनमावासं दृष्ट्वा अति प्रसन्नोऽभूत्। अरुणा भारतीवेनमहोदयायै स्वागतं व्याहरन्ती करुणमुत्सङ्गे उत्थाप्य वात्सल्यभावाभिभूता वारंवारं चुम्बन्ती दृढमालिङ्गत्। अरुणया सह विविधवार्तालापे मग्ना भारतीवेनमहोदया, रात्रिभोजनानन्तरमेवारुणयानुज्ञाता विद्यालयं निवर्तितुमपारयत्।

करुणस्यागमनेन अरुणाया राजकीय आवास आनन्दभवनमभवत्।

गृहमन्त्रिरूपेण अरुणाया जीवनमत्यधिकं कार्यव्यापृतमभवत्। सम्पूर्णस्य राज्यस्य प्रशासनव्यवस्थाया भारस्तस्या आसीत्। दिवसे सचिवालयेऽसंख्यानां प्रजाजनानामागमनं, यथासम्भवं सर्वेषां समस्यानामवबोधः, समाधानञ्च, उच्चाधिकारिभिः सह समागमाः, तेषां कार्यस्य विवेचनं, परामर्शो, लेख्यपत्राणां प्रचयस्य अध्ययनं, तेषु यथावश्यकं निर्देशाः, हस्ताक्षराणि, अगणितकार्येषु निरन्तरं संलग्नारुणा भोजनार्थमपि काठिन्येनैवावकाशमलभत।

सचिवमाध्यमेन अनुभवहीनस्य चन्द्रप्रकाशस्य क्रियाविधावपि तस्याः तीक्ष्णा दृष्टिरनवरतमासीत्। यथाकालं यथावश्यकञ्च सा तमाकार्य परामर्शेन निर्देशेन च तस्य साहाय्यमकरोत्।

मुख्यमन्त्रिमहोदयोऽपि प्रशासनस्य सञ्चालने अरुणायाः परामर्शं गुर्वर्थम् अमन्यत, अतः सायंकाले कौण्डकरमहोदयस्य राजकीये निवासे तेन सह विमर्शो दैनन्दिनी प्रक्रियाभवत्। सायंसमये गृहेऽपि तां द्रष्टुमागतानां नागरिकाणाम् उच्चाधिकारिणाञ्च परम्परा प्रायोऽविच्छिन्ना एवास्थात्। एवम्

अतिकर्मिष्ठा अरुणा करुणायापेक्षितं कालं नावाप्नोत्। प्रायः प्रातःकाले, तत्पश्चाच्च रात्रौ भोजनावसरे एव सा करुणस्य सान्निध्यसुखमन्वभूत्। करुणस्य सर्वविधसुखानां मनोरञ्जनस्य च अपेक्षाणां पूर्त्यै पूर्णा व्यवस्था गृहे एवासीत्। युवतयो धात्र्यः पठने लेखने क्रीडासु च मित्रमिव करुणस्य सहयोगार्थं निरन्तरं तत्परा आसन्।

एकदा अरुणाया गृहे केचन उच्चाधिकारिणः सपरिवारं रात्रिभोजने उपस्थिता आसन्। करुणोऽपि तत्रैव भोजनफलके भोजनं कुर्वन् स्थित आसीत्। आगन्तुकाः स्त्रियः करुणेन सह बालसुलभे वार्तालापे प्रवृत्ताः। तस्य अध्ययनविषये, सामान्यज्ञानविषये च निरन्तरे वार्तालापक्रमे एका युवतिः करुणं तस्य पितुर्नामापृच्छत्। पितुर्नाम्नः प्रश्ने समुपस्थिते करुणस्तूष्णीमेव स्थितः। अवस्थाया विकटताम् अनुभवन्ती अरुणा अकस्मात् केनचिदन्येन प्रश्नेन तस्या युवत्या ध्यानमाकृक्षत्, करुणस्य पितुर्नाम्ना सम्बद्धञ्च तस्याः प्रश्नं यथाकथञ्चिद् अपानुदत्।

अभ्यागतास्तु भोजनानन्तरं गताः, परमरुणायाश्चित्ते वैकल्यमवर्धत। अद्यैका स्त्री करुणं तस्य पितुर्नाम अपृच्छत्, कदाचित् कश्चित् तामेव यद्येतादृशं प्रश्नमप्रक्ष्यत् तदा किमुत्तरमभविष्यत्। प्रत्येकं पुत्रस्य पिता तु भवत्येव, अतो नैतादृशः प्रश्नोऽप्राकृतिकः। विधवाया अपि मृतस्य पत्युर्नाम यदि केनापि जिज्ञास्यते न तम्प्रति क्रोध उपयुज्यते।

पितृष्वस्रा प्रबोधिता, स्ववहितापि निर्मलचित्ता, अदृष्टापराधा सा प्रमोदेन विमोहिता प्रतारिता च कामविवशा भूत्वा तस्मै प्रवञ्चकाय आत्मानं समार्पयत्। एकमेव तत्स्खलनं तस्या जीवनस्य पन्थानं पर्यवर्तत।

विचाराणां प्रवाहः तामनिर्वृतां, व्यग्रां, विह्वलाञ्चाकरोत्। अद्य करुणो बालकोऽस्ति; युवाभूतः स स्वयमपि मां प्रक्ष्यत्येव। यद्यहं तं तस्य पितुः विषयेऽनभिज्ञमेव रक्षामि स कदाचिदात्मानम् अज्ञातकुलशीलम् अधर्म्यं कौलटेयं मन्येत। अहं तु यतेन्द्रिया अपांसुला चास्मि; प्रमोदादतिरिक्तेन न केनापि सह एतादृशस्य सम्बन्धस्य कल्पनापि मया मनसा कृता। यौवनस्य मध्याह्नेऽपि विधवा इव संयतमस्ति मम जीवनम्। परं पितुर्विषयेऽनभिज्ञस्य पुत्रस्य मनसि अङ्कुरितं सन्देहबीजं सदाचारिणीमपि मां दुश्चरित्रां विधास्यति। एवं चिन्तापर्याकुलारुणा प्रमोदस्य विश्वासभङ्गं स्मृत्वा विदीर्णहृदया

कृच्छ्रेणात्मानमयन्त्रयत।

रात्रौ पर्यङ्के पार्श्वे शयानः करुणोऽरुणामपृच्छत् - मम्मा! मम पिता कोऽस्ति? सा मम पितुर्नाम पृच्छति स्म, मम पितुर्नाम किमस्ति ?

पुत्रस्य प्रश्नं श्रुत्वा प्रहाराकुला इव, बधरीकृता इव, जडीकृता इव तीक्ष्ण व्यथोपेता अरुणा न किमपि वक्तुमशकत्। उत्तरमप्राप्य करुणः पुनस्तामप्राक्षीत्- मम्मा! विद्यालयेऽपि सहपाठिनो मां पृच्छन्ति, किं नाम अस्ति मम पितुः? मम सर्वेषां सहपाठिनां माता अस्ति, पितापि सर्वेषामेव भवति। कृपया कथय कोऽस्ति मम पिता ?

करुणस्य मनोव्यथां प्रश्नाकुलताञ्च ज्ञात्वा व्याकुलीभूता, क्षुब्धा, विमोहिता, कातरा च अरुणा तं गाढमालिङ्ग्याकथयत् - करुण, तव पितुर्नाम प्रमोदः अस्ति। त्वं हि तव पितुर्मम च प्रेम्णः प्रतीकमसि। परं दुर्भाग्येन तव पिता मां प्रवञ्च्य परित्यज्य गतः। त्वं मम पुत्रोऽसि, अहं चास्मि तव माता।

**इति षष्ठ उच्छ्वासः**

# अथ सप्तम उच्छ्वासः

मुम्बईमहानगर्याः समीपस्थेषु क्षेत्रेषु धार्मिकाणीव प्रतीयमानानि मुस्लिम सम्प्रदायस्य मजारसदृशानि अनेकानि स्थानानि अकस्मादस्तित्वमागतानि। नातिदीर्घे एव काले मजारसदृशेष्वेषु स्थानेषु भवनान्यस्तित्वमागतानि यत्र मुस्लिमसम्प्रदायस्य मदरसारूपाणि शिक्षाकेन्द्राणि प्रारब्धानि। न कोऽपि जानाति एतेषां भवनानां निर्माणार्थं धनस्य व्यवस्था कुतोऽभवत्। वस्तुतः शत्रुदेशस्य गुप्तचरैः नियुक्तास्तेषां प्रतिपुरुषा एषां केन्द्राणां सञ्चालका मुल्लाजना महानगर्या मुस्लिम क्षेत्रेषु गत्वा युवकानाकृष्य साम्प्रदायिकेन विषेण तेषां हृदयानि कलुषितानि कृत्वा बम्बविस्फोटादिभिः भारतमुपद्रवग्रस्तं कर्तुं सप्रयत्ना आसन्।

मुख्यमन्त्री कौण्डकरमहोदयः, गृहमन्त्री डॉ. अरुणा, आन्तरिकसुरक्षामन्त्री चन्द्रप्रकाशश्च आपत्कालीने एकस्मिन् समागमे मदरसारूपेष्वेषु केन्द्रेषु धार्मिक शिक्षाव्याजेन प्रणीयमानानां विध्वंसकारिणां क्रियाकलापानाम् उन्मूलनाय सगाम्भीर्यं विमर्शमकुर्वन्। अरुणा आत्मनो विश्वस्तान् जनान् प्रच्छन्नरूपेण प्रशिक्षणार्थिनो विधाय सर्वेष्वेव केन्द्रेषु प्रेषयितुं चन्द्रप्रकाशमादिशत्। एते गुप्तचरा मुल्लाजनानां विषं वमन्ति भाषणानि टेपरिकॉर्डरयन्त्रेण ध्वनिसम्पुटे आरूढानि कृत्वा चन्द्रप्रकाशं समार्पयन्। चन्द्रप्रकाशो ध्वनिसम्पुटारूढानि एतानि मुल्लाजनानां भाषणानि कौण्डकरमहोदयमरुणाञ्चाश्रावयत्।

मुख्यमन्त्रिणो योजनानुरूपं चन्द्रप्रकाश एतादृशानि एकादशकेन्द्राण्याक्रम्य तान् मुल्लाजनान् तेषामन्धानुयायिनश्च वन्दिनः कर्तुं नगररक्षिणोऽधिकारिण आदिशत्।

अस्मिन्नभियाने शताधिकम् उग्रवादिनो वन्दिनः कृताः, परमनेके उग्रवादिनः, ये तस्मिन् दिने केन्द्रेषु उपस्थिता नासन्, मुक्ता एवातिष्ठन्।

विरोधिदलस्य नेतारो, ये राज्यस्य शान्तिपूर्णया व्यवस्थया दुःखिता आसन् [illegible]भियानं सम्प्रदायविशेषं दमयितुं कृतं सर्वकारस्य प्रयासमकथयन्।

विपक्षिदलस्य नेतुर्गृहे अस्याभियानस्य विरोधे विरोधिजनसमूहस्य समागमोऽभवत्। असामाजिकानि तत्त्वानि तत्र उपस्थितान्यासन्। चन्द्र प्रकाशस्य प्रतिपक्षिणोऽपराधिजगतो गणाधिपतिर् अन्नाभाईरपि तत्र आमन्त्रित आसीत्। अस्मिन् समागमे मुस्लिमशिक्षाकेन्द्रेषु सर्वकारेण कृतस्याभियानस्य भर्त्सना नेतृमहोदयेन कृता। अस्य प्रजोपप्लवस्य विरोधे राज्यव्यापिन आन्दोलनस्य आह्वानं नेतृमहोदयेन कृतम्।

समागमे उपस्थित एकः शिक्षितो विधानसभासदस्योऽकथयत् - परमेतादृशी सूचनास्ति यत् मदरसारूपेष्वेषु केन्द्रेषु शत्रुदेशस्य प्रतिपुरुषा राष्ट्रविरोधिनो जनाः सक्रिया आसन्, मुल्लाजनास्तेषामनुयायिनश्च विध्वंसकानां बम्बविस्फोटादिकार्याणाम् उपकल्पने लग्ना अभवन्। नैष सम्प्रदायस्य धर्मस्य वा प्रश्नः; अत्र तु राष्ट्रस्य सुरक्षायाः प्रश्नः; अत एतादृशानां क्रियाविधीनां दमनमेव श्रेयस्करम्।

अत्यन्तं क्रुद्धो विपक्षिदलस्य नेतृमहोदयोऽमुं विधानसभासदस्यं भर्त्सयन् अवादीत् - भवान् प्रतिपक्षिदलस्य सदस्यः सर्वकारस्य भाषां किमिति वदति ? विरोध एवास्माकं धर्मः। यदि नैतच्छक्यम्, परित्यज राजनीतिम्। अस्मिन् विषये मुल्लाजनैः सह मुस्लिमसम्प्रदायस्य प्रतिनिधीन् एकत्र नीत्वा सर्वकारस्य भर्त्सना कार्या; पश्चादेकस्मिन् जनसमागमे सर्वकारस्य मुस्लिमसम्प्रदायं प्रति विद्वेषपूर्णो व्यवहारोऽनावृतः कर्तव्यः। पुनश्च, एष जनसमागमो जनयात्रारूपेण राजमार्गे विरोधस्य प्रदर्शनं करोतु।

विपक्षिदलस्य उक्तो नेतृमहोदयः अन्नाभाईं सङ्केतेन किञ्चिदवाबोधयत्, समागमश्च विसृष्टः।

चन्द्रप्रकाशो गुप्तचरसकाशादेतत्सर्वमवगत्य शान्तिव्यवस्थायै विश्वस्तान् सशक्तांश्च नगररक्षिणो न्ययोजयत्। सर्वविधप्रयासानन्तरमपि विपक्षिणः शान्तिभङ्गेऽसफला एवातिष्ठन्।

शान्तिभङ्गस्य प्रयासेष्वसफलो विपक्षिदलस्य नेतृमहोदयोऽत्यन्तं क्रुद्धः अन्नाभाईमाकार्य तमभर्त्सयत्; बम्बविस्फोटादिभिश्च मुम्बईमहानगरीमुपद्रव ग्रस्तां कर्तुमादिशत्।

तस्मिन्नेव दिने सायंकाले सब्जीमण्डीक्षेत्रे, लक्ष्मीनारायणमन्दिरे, मस्जिद

समीपे च बम्बानां विस्फोटेन सम्पूर्णा महानगरी विकम्पिता; अष्टत्रिंशज्जना मृता:; सर्वत्र च भयं व्याप्नोत्।

गृहमन्त्री अरुणा चन्द्रप्रकाशमाह्वयत्। विरोधिदलस्य नेता, चन्द्रप्रकाशस्य पूर्वप्रतिद्वन्द्वी अन्नाभाईश्च, द्वयोरपि मैत्रीम् अरुणा शङ्कास्पदममन्यत। चन्द्र प्रकाश: तत्कालं सर्वमवागमत्। स नगररक्षिबलस्य महानिरीक्षकमाहूय अन्नाभाईनाम्न: गणाधिपस्य उपलब्धिस्थानं निर्दिश्य तत्कालं तं वन्दिनं कर्तुमादिशत्।

नगररक्षिणोऽन्नां वन्दिनमकुर्वन्। चन्द्रप्रकाशस्य निर्देशेन बम्बनिर्माणकार्ये कुशल: अन्नानामकस्य खलस्य सहयोगी अपि वन्दीकृत:। अन्वेषणगवेषणे लग्नानां नगररक्षिणां तीव्रै: वेत्राघातै: अन्यैश्च विविधै: यातनासाधनै: आसायं प्रात:पर्यन्तं सम्पूर्णायां रात्रौ निर्दयं ताडितौ द्वावपि दुष्टौ सर्वमपराधं स्वीकृतम् अकुरुताम्। अन्नानामको दुष्टो विरोधिदलस्य नेतुरपि सर्वं कृत्यमनावृतमकरोत्। तस्य साक्ष्येण बम्बविस्फोटादीनां हिंसापूर्णानां क्रियाकलापानां सूत्रधार उक्तो नेता अपि वन्दीगृहे प्रक्षिप्त:। नगररक्षिण: तस्यैव साक्ष्येण अपराधे तस्य सहयोगिनोऽन्यानपि सर्वान् निगृह्य कारागारे न्यपातयन्।

एवमरुणायाश्चन्द्रप्रकाशस्य च दूरदृष्ट्या कौण्डकरमहोदयस्य नेतृत्वे सगाम्भीर्यं प्रयासै: सम्पूर्णे राज्ये शान्तिव्यवस्था सुस्थिराभूत्।

गृहमन्त्रिरूपेणात्यधिकं कार्यव्यापृताप्यरुणा रानीं सूजीं च न कदापि व्यस्मरत्। अबोधं शिशुमुत्सङ्गे दधाना सा यदा मुम्बईमहानगरीमागता रानी एव तस्या: सहायिका अभवत्। तस्या एव प्रार्थनया सूजी अरुणां स्वकीये ऽतिथिगृहे सुरक्षितामरक्षत्। सा अचिन्तयत्- अद्य सा राज्यस्य गृहमन्त्री अस्ति; स्वकीयां सखीं रानीं यदि सा कथञ्चिद् राजकीयसेवायां विनियोजयति तदा तस्या जीवनं सार्थकं भविष्यति। तस्मिन्नेव दिने सायंकालेऽरुणा मुख्यमन्त्रि महोदयस्य समक्षं रान्या राजकीयसेवायां नियुक्त्यर्थं प्रार्थयत। अस्मिन् प्रस्तावे समुपस्थिते कौण्डकरमहोदयोऽकथयत् – आर्ये, चन्द्रप्रकाशमुपमन्त्रिपदे नियोक्तुं क्षमा अत्रभवती एतादृशं सामान्यं कार्यं स्वयमपि कर्तुं क्षमा; परं भवत्या: कथनन्तु करणीयमेव। कौण्डकरमहोदय: तत्कालमेव दूरभाषेण मुख्यसचिवं परस्मिन्नेव दिने रानीं लिपिकरूपेण सचिवालये एव नियोक्तुमादिशत्। अरुणाञ्च

अकथयत् – स्वसखीं रानीं कथय यत्सा प्रातरेव नियुक्त्यर्थमावेदनपत्रं मुख्य सचिवमहोदयस्य सेवायां प्रस्तौतु।

एवम् अरुणायाः प्रयासेन सचिवालये एव रानी लिपिकरूपेण नियुक्तिं प्राप्नोत्। रान्या उपकारेण बद्धारुणात्मानमीषत्परिमाणे कृतज्ञताभारमुक्ताम् अन्वभवत्। रान्याः सतीशस्य च, उभयोरपि राजकीयसेवायां नियुक्तिस्तयो र्जीवनमेव पर्यवर्तत।

एकस्मिन् दिनेऽरुणा कार्यालये उच्चाधिकारिभिः समागमे व्यापृतासीत्। तस्याः सचिव इण्टरकॉममाध्यमेन तामसूचयत् यत् पटियालानगरादागता अनुराधानामधेया एका स्त्री, या आत्मानं भवत्याः सकुल्यां कथयति, भवत्या दर्शनमिच्छति। एतच्छ्रुत्वा विचलितहृदया अरुणा सचिवमाज्ञापयत् – मदीयं कक्षमानीय तां सादरमुपवेशय। एवं सचिवं विनिर्दिश्य विमोहितापि सा अधिकारिभिः सह विमर्शप्रक्रियां सगाम्भीर्यं निरन्तरमरक्षत्।

किञ्चित्कालानन्तरं समागमाद् विनिवृत्यारुणा आत्मनः कक्षं गत्वा, पितृष्वसारं दृष्ट्वा, धावित्वा, तया परिमृष्टा, परिष्वज्य तां, सगद्गदमरोदीत्। सागरं परित्यज्य अरुणाया हृदि पीडारूपेण समुपचितं जलं बाष्पीभूय तस्या अक्षिभ्यां निरन्तरं प्रावहत्। स्वयमपि भावाभिभूता, बाष्पवृत्तिकलुषितकण्ठा, निरन्तरमश्रूणि विमुञ्चन्ती पितृष्वसा अनुराधा यथाकथञ्चित् तां सामयितुं प्रायसत्। किञ्चित्कालं यावत् नैकतरापि तयोः किमपि वक्तुमपारयत्। यथाकथं सुस्थिरा भूत्वा अरुणा अकथयत् – पितृष्वसः, अद्य सूर्यः पश्चिमस्यां दिशि कथमुदैत्? सव्यथापि अनुराधा समन्दस्मितमकथयत् – अरुणे! नैवं वद, न त्वं क्षणमात्रमपि अस्माभिर्विस्मृता। निरन्तरं त्वमेवास्माकं चर्चाया विषयः। त्वमेवास्मानागमनात् न्यवारयः; तव कथने औचित्यं पश्यन्तो वयं त्वां द्रष्टुं सोत्कण्ठा भवन्तोऽपि नात्रागताः। समाचारपत्रेषु दूरदर्शने च त्वद् विषयकान् समाचारान् श्रुत्वा वयं सदैव अत्यधिकमानन्दमन्वभवाम। अत्रागत्य तवैश्वर्यं पुण्योदयं च दृष्ट्वा अतिशयेन उल्लसितास्मि। दैववशात् गृहान्निर्गत्यापि त्वम् अभ्युदयेन युक्ता इत्यस्त्यस्माकं सन्तोषस्य विषयः। कुत्रास्ति तव पुत्रः? तं द्रष्टुमुत्सुकास्मि।

अरुणा उदतरत् – करुणो गृहेऽस्ति। अधुना आवां गृहं गच्छावः। एतत्

कथयित्वा सा इण्टरकॉमदूरभाषेण सचिवमादिशत् – अहं गृहं जिगमिषामि; परिधिस्थान् आदिश। तत्कालमेव च सा पितृष्वसारं सह नीत्वा कार्यालयाद् बहिरागता।

तस्या आगमनात्पूर्वमेव परिधिस्थाः सावधाना उपस्थिता आसन्। चालकः कारयानस्य द्वारमुद्घाट्यावनतशिरा उपस्थित आसीत्। अरुणा प्रथमं पितृष्वसारं कारयाने प्रावेशयत्, ततश्च स्वयमपि प्राविशत्। द्वारं तु परिधिस्थेन पिनद्धम्। एवं राष्ट्रध्वजयुक्तेन कारयानेनारुणा स्वगृहं प्रति प्रातिष्ठत। एकस्मिन् याने तस्याः परिधिस्था, द्वयोश्च यानयोः सुरक्षाकर्मिण एवं चत्वारि यानानि अरुणाया राजकीयं निवासं प्रति अधावन्।

गृहमागतां मातरं दृष्ट्वा करुणो मम्मा!!! इत्युच्चैः ब्रुवन् धावित्वा तस्याः प्रेष्ठे प्रासजत्। मात्रा सह अपरिचितां स्त्रियं दृष्ट्वा किञ्चित्सङ्कुचितः करुणः प्रश्नाकुलया दृशा मातरमैक्षत। अरुणा अकथयत् – करुण, एषा मम पितृष्वसा तव च मातामही अस्ति। अत्रान्तरे अनुराधा करुणमुत्सङ्गे उत्थाप्य, परिष्वज्य अचुम्बत्। अनेन वात्सल्यातिशयप्रदर्शनेन किञ्चित्क्रुद्ध इव करुण आत्मानं मोचयित्वा उच्छिष्टमिव मुखं वस्त्रखण्डेन अकल्मषं कर्तुं प्रायतत। एतद्दृष्ट्वा विहस्य करुणा तमवदत्– पुत्र, नैषा पारक्या; सम्बन्धे एषा तव मातामही अस्ति; त्वयि च अन्त्यन्तं स्निह्यति। करुणोऽपृच्छत् – मम्मा, मातामही का भवति ? अरुणाकथयत्– अहं तव माता अस्मि; एषा च मम पितृष्वसा; एवमेषा ते मातामही अस्ति। करुणः पुनरपृच्छत् – मम्मा, पितृष्वसा का भवति ? अरुणा उदतरत् – मम पितुः भगिनी मम पितृष्वसा भवति। करुणः पुनरपृच्छत् – मम्मा, किं ममापि काचित् पितृष्वसा अस्ति ? अरुणा उदतरत् – तव पितृष्वसा नास्ति; अधुना मातामहीम् अभिवादय। अरुणाया आदेशं श्रुत्वा करुणः स्वकीयौ लघुपरिमाणौ करौ सम्पुटीकृत्य मन्दंमन्दमकथयत् – नमस्ते। एतच्छ्रुत्वा वात्सल्येन अनुराधा तं पर्यष्वजत। अधुना करुणोऽपि तामविरोधम् पश्यन् स्थितः। एवं परिचयानन्तरम् अरुणयानुज्ञातः करुणः कन्दुकेन क्रीडितुं बहिरगच्छत्।

अरुणा इण्टरकॉमदूरभाषेण सेविकां चायमल्पाहारञ्चानेतुमादिशत्। आदेशस्य प्रतीक्षायामेव स्थिता इव सेविका शीघ्रमेव विशाले फलके अतिभव्यां

द्रोण्यां सुसज्जितमल्पाहारं, उत्कृष्टे पिठरे चायं चषकौ च पर्यकल्पयत्। चायपानेन अल्पाहारेण च सहैव तयोर्मध्येवार्तालाप आरब्धः।

अरुणावदत् – पितृष्वसः, दुग्धात् मक्षिका इव दूरं प्रक्षिप्ताहमद्य कथं भवत्याः स्मृतिपथमागता?

अनुराधाकथयत् – मैवं वद, स्नेहेन पालिता पोषिता च त्वमेवास्माकं स्नेहबन्धनात् स्खलिता, दैवेन प्रेरिता, गृहमन्त्रिपदमधिग्रहीतुमिव अत्रागता। नात्र कस्यापि दोषः। पञ्चवर्षावधिपर्यन्तं न त्वया कदाप्यात्मविषये सूचितम्। एतावत् दीर्घकालानन्तरं यल्लिखितं तदप्युपचारमात्रम्। पत्रे च आगमनादपि अस्मान् न्यवारयः। मात्रे, पित्रे वा न त्वया किमपि लिखितम्। तव निरपेक्षभावेन आहताः सर्वेऽत्यन्तं व्यथिता अपि, सकृच्छ्रं तूष्णीं स्थिताः। समाजस्य कुहकानां मर्यादानां शृङ्खलासु बद्धौ तव मातापितरौ इच्छन्तावपि न किमपि कर्तुम् अपारयताम्। किं परिवारजनाः तव स्मृतिपथं न कदाप्यायान्ति?

अरुणावोचत् – परिवारजनैः मेलितुं मनस्तु अत्यधिकम् एषिषिषति, परम् आत्मानमत्यधिकं नियन्त्र्य कृच्छ्रेण रुणध्मि। यद्यहं तत्र गच्छामि परिवारजनाः प्रतिवेशिनाम्प्रश्नानामुत्तरं कथं दास्यन्ति, इति विचार्य जिगमिषन्ती अपि नागच्छम्।

एतच्छ्रुत्वा अश्रूणि विमुञ्चन्ती अनुराधा सगद्गदमगादीत् – दुर्भाग्यमेतद् यदस्माकं प्रेष्ठा त्वमेवं मानसिकीं यन्त्रणामन्वभवः। त्वादृशी पुत्री तु सहस्रेषु जन्मसु कृतानां पुण्यानां फलं भवति। एकाकिन्या एव त्वया सुदूरस्थानादागत्य अस्य राज्यस्य शासनमधिगृहीतम्। त्वादृश्यो नार्यो यदपि कुर्वन्ति तदेव समाजे आदर्शरूपेण प्रतिष्ठाप्यते। तव पिता स्थानान्तरितो भूत्वा अत्रैवागतः। ह्य एव सपरिवारस्तवपिता अत्र प्राप्तः। मुम्बईमहानगरी तु त्वया निरवशेषम् अभिमन्त्रिता।

अरुणावदत् – पितृष्वसः, न मया महानगरी अभिमन्त्रिता, अहं तु स्वयं कीलिता, पक्षास्फालनेऽप्यक्षमा चक्रवाकीव, तरङ्गेषु प्रवहन्ती क्षेपणीहीना नौका इव निराधारा, लक्ष्यहीनापि यथाकथं निरन्तरं गतिशीलास्मि।

अनुराधाकथयत् – पुत्रि, बहूनि कष्टानि त्वयानुभूतानि, अधुना नैवं भविष्यति। तव पिता माता च स्वकर्तव्यं वक्ष्यतः।

अश्रूणि विमुञ्चन्ती अरुणावदत् – नष्टे शस्ये किं करिष्यन्ति मेघाः ? याते शीते कम्बलानि किमर्थम् ? गतमिव मम मातर्यौवनं म्लानमस्ति; मम जनकस्याद्य विप्रबोधोऽस्ति मोघः।

जातकारुण्या सजलनयना अनुराधाकथयत् – अरुणे, अतिशयेन संघर्षपूर्णम् अस्ति तव जीवनम्। त्वदीया आत्मनिष्ठा, आत्मनियमनञ्च स्वतःप्रमाणं विलक्षणस्य तव जीवनस्य।

अरुणाकथयत् – मम माता पिता च भवत्या सह नागतौ। तावपि यदि आगच्छेताम् अत्युत्तमं स्यात्।

अनुराधावदत् – तावप्यागमिष्यतः। मया सार्धं करुणेन सह त्वमप्यागच्छ पितुर्गृहम्। करुणं त्वाञ्च दृष्ट्वा परमोल्लसितौ भविष्यतः।

अरुणाकथयत् – सामाजिकमर्यादाया रक्षार्थं तावेव मां गृहत्यागार्थं विवशाम् अकुरुताम्। अहं स्वतः तयोः पार्श्वं न गमिष्यामि। यदि तौ स्वयमागत्य करुणेन सह मां नेतुमागच्छतः तदैवैतत्सम्भवति।

अनुराधावदत् – तवैष आत्मसम्मानभावः सदैव प्रशस्यः। एतेन सहैव तवौदार्यं क्षमाशीलतादिगुणा अपि स्तुत्या वर्तन्ते। पुत्रि, प्रमोदस्तव पार्श्वम् आगमिष्यति; पश्चात्तापबुद्धिस्तस्य मनः परावर्तयत्। तव तिरस्काररूपस्य पापस्य स्मृत्या सोऽधुना अत्यधिकमनुतप्तः त्वां देवीमिव पूजयति। तस्य विषये नाहं किमपि कथयामि। सोऽस्ति तवापराधी; क्षमाप्रार्थनया, सुहेतुवादेन, सन्देहनिवृत्त्या च तव विश्वासार्जनं तस्यैव कर्तव्यम्। मदीयस्त्वेतावान् परामर्शो यत् यदा नतमस्तको भूत्वा आगत्य स क्षमां याचेत, क्षमस्व तम्। इदानीम् अत्रविषये एतन्मात्रम् एवालम्।

अरुणाकथयत् – पितृष्वसः, मया क्षान्तोऽपि स किं मम स्नेहपात्रं सम्भवति? किं तस्य तिरस्कारं विस्मर्तुं शक्नोमि ? अहं, मम कुटुम्बिनश्च यादृशीर्दशा अन्वभवन्, समाजस्य तिरस्कारपूर्णा दृष्टिः, करुणस्य जन्मन आरभ्य अद्य यावत् या पीडा मयानुभूता, यथा एकाकिन्यहं अस्यां महानगर्यां कालम् अयापयं, यथा चाहं करुणमपालयं, पञ्चवर्षावधिपर्यन्तं यथाहं विधवारूपेण प्रसिद्धाभवम्, एतत् सर्वं जानती अपि भवती तस्मै क्षमादानम् अनुशंसतीत्याश्चर्यम्। नासौ क्षमापात्रं, कदापि न। अद्यापि करुणः पृच्छति

यत् तस्य पिता कोऽस्ति? जानामि, आगामिषु वर्षेषु युवाभूतः करुण एव पितुर्विषये जिज्ञासिष्यते; तस्यैष प्रश्नो मम समक्षं वैषम्यं जनयिष्यति। परं किमहं करवाणि; वञ्चकस्य तस्य नाम एव मम हृदयं कषायं करोति। एवं कथयन्ती अरुणा साश्रुलोचनाभवत्।

अनुराधाकथयत् - अरुणे, किं कदाचित् त्वया विचारितं यत् कस्य कृते अस्माकं हृदि घृणा उत्पद्यते। वस्तुतो योऽस्माकं प्रेष्ठः सैवास्माकमतिशयेन घृणापात्रम् भवति। त्वं प्रमोदं स्मर्तुं नेच्छसि, यतो हि स सदैव तव हृदये वसति; अद्यावधि नासौ क्षणमात्रमपि त्वया विस्मृतः। तस्योपहारं करुणं निरन्तरमुत्सङ्गे सवात्सल्यं रक्षन्ती त्वं न कदापि तं विस्मर्तुं शक्नोषि।

एतच्छ्रुत्वा पुना रुदती अरुणा प्रमोदविषये न किमपि कथयितुं प्रार्थयत। सायंकाले भोजनानन्तरमरुणा कारयानेन पितृष्वसारमनुराधां स्वपित्रोः गृहं प्रापयितुं यानचालकमादिशत्। करुणमुत्सङ्गे निधाय वात्सल्यं प्रदर्शयन्ती अरुणयानुज्ञाता अनुराधा गन्तुमुदतिष्ठत्। अरुणा च तां गृहद्वारं यावदन्वमन्त्रयत।

पितृष्वसारमनुमन्त्र्य शैथिल्येन आसन्दिकायां स्थिता म्लानमुखी अरुणा सचिवस्याग्रहेणापि गृहमन्त्रालयस्यावशिष्टानि लेख्यपत्राणि निरीक्ष्य तेषु निर्देशं लेखितुं नाशक्नोत्। विगतजीवनस्य तिक्तरसा अरुन्तुदाः तिग्माः पीडकराः स्मृतयः तस्या मनसि आततिम् उदभावयन्। सुषुप्सुं करुणं पर्यङ्के शाययित्वा सा प्रसाधनकक्षं प्रति गन्तुमुद्यता एवासीद्यदा चलदूरभाषस्य घण्टिकायाः स्वरस्तस्या ध्यानमाकृक्षत्। चलदूरभाषं कर्णस्य समीपमानीय सावदत् - हंहो, कोऽत्र भो,

अपरतः सा अश्रृणोत् - हंहो, अरुणे, मङ्गलं भवतु ते।

अरुणा - क्षम्यताम्, का तत्रभवती, न मया प्रत्यभिज्ञाता।

अपरतः - पञ्चवर्षावधिपर्यन्तं दूरं स्थित्वा इदानीं पुत्री मातुः स्वरमपि न प्रत्यभिजानाति।

एतच्छ्रुत्वा संयमस्य सर्वाण्यपि बन्धनानि विस्मृत्य अप्रबोधनीया अरुणा सगद्गदस्वरमरोदीत्। उभयत्रापि रोदनादतिरिक्तं न कापि किमपि वक्तुम् अशक्नोत्। अन्ततो मातावदत् - पुत्रीमवलोकयितुं पिपासिता एषा माता त्वया मेलितुमिच्छति। श्वः रविवासरोऽस्ति, अहमागमिष्यामि। अरुणाकथयत्

– मम्मा, अहं त्वामानेतुं प्रातः दशवादनसमये कारयानं प्रेषयिष्यामि। अधिकं वार्तालापेऽक्षमे उभे अपि दूरभाषं व्ययुङ्क्ताम्।

होराद्वयपर्यन्तं व्यतीतायां रात्र्यां निद्रादेवी कृच्छ्रेणारुणां स्वोत्सङ्गे अशाययत्। अन्येद्युः प्रातः अरुणा इण्टरकॉममाध्यमेनैव सचिवं दिवसस्य सर्वाः प्रज्ञप्तीः प्रलम्बयितुम् आदिशत्। अरुणया प्रेषितेन कारयानेन अरुणाया माता, पिता, पितृष्वसा च तत्रागताः। होरार्धपर्यन्तं निरन्तरमश्रुविमोचनानन्तरं यथाकथं वार्तालापमारभन्त। क्रमश आलिङ्गनबद्धान् सर्वानेव रुदतो दृष्ट्वा रोदनं सर्वेषाम् एव आवश्यकं मत्वा रुदन्तं करुणं सान्त्वयन्ती अरुणा अकथयत् – एषा मम माता, तव चैषा मातामही अस्ति। एष मम आदरणीयः पिता, तव मातामहः अस्ति। अरुणायाः पिता करुणं परिष्वज्य सवात्सल्यमवदत् – एषा ते माता, अहमस्याः पिता अस्मि। अस्याः पिता अहं सम्बन्धेन तव मातामहः अस्मि। एतच्छ्रुत्वा करुणो बालसुलभया उत्सुकतया अपृच्छत् – मातामही मम मातुः माता अस्ति; भवान् मम मातामहः तस्याः पिता अस्ति; मम मम्मा मम माता अस्ति मम पिता कोऽस्ति ?

करुणस्य प्रश्नं श्रुत्वा सर्वे किंकर्तव्यविमूढाः परस्परम् अन्योन्यं पश्यन्तो न किमपि वक्तुमपारयन्। अरुणा करुणमङ्के निधाय क्रीडनकं दत्त्वा तं क्रीडासक्तमकरोत्।

अरुणाया आदेशेन सेवकाः फलके चायमल्पाहारञ्च पर्यकल्पयन्। अरुणाया ऐश्वर्यं दृष्ट्वा अतिशयेन प्रसन्नस्तस्याः पिता अकथयत् – अस्माकं पुत्री असाधारणी, अतिविशिष्टा, विचक्षणा च सती कुटुम्बस्य गर्वः। ईश्वरेच्छाम् अवगन्तुमक्षमा वयं जीवने आपतनशीलानां घटनानां रहस्यं न जानीमः। चतुर्दशवर्षावधिपर्यन्तं वने स्थित्वा एव भगवान् श्रीरामो राक्षसानहन्। श्रीरामस्य वनवासं विना राक्षसानां संहारः कथं सम्भव आसीत्। एवमेव करुणस्य जन्मना कारितोऽस्या गृहत्यागोऽपि दैवेनैव प्रेरित आसीत्। अद्य अरुणा यदि महाराष्ट्रराज्यस्य सर्वकारे गृहमन्त्रिपदम् अलङ्करोति, करुणस्यैव भाग्यमेतत्। अरुणाया आग्रहेण अल्पाहारग्रहणे चायपाने च प्रवृत्ताः सर्वे वार्तालापक्रमं निरन्तरमरक्षन्।

अरुणाया माता अकथयत् – अस्माकं पुत्री बाल्यावस्थात एव विशिष्टा

लोकोत्तरप्रतिभासम्पन्ना चास्ति। अद्य यावत् दैवयोगादनया बहूनि दुःखानि अनुभूतानि, न वयमिमामधुना एकाकिनीं त्यक्ष्यामः।

अरुणायाः पिताकथयत् – वयं सर्वे त्वामानेतुमागताः। अधुना अस्माभिः सह गृहमागच्छ।

अरुणाकथयत् – पितः! आदरणीया अत्रभवन्तः करुणस्य जन्मनः पश्चात् कुलमर्यादाया रक्षार्थं स्वयं परित्यक्तां मामिदानीं करुणेन सह कुटुम्बे कथं स्वीकरिष्यन्ति ? यत्सत्यं, स्थितिस्तु अद्यापि तादृशी एव।

पिताकथयत् – मैवं वद, दैवेच्छया यदपि घटितं न वयं परिवर्तयितुं शक्नुमः; परमिदानीं तव जीवनमवश्यमेव व्यवस्थितं करणीयं वर्तते। सर्वप्रथमं गृहमागच्छ, तत्पश्चात् सर्वं सुव्यवस्थितं भविष्यति।

अरुणावदत् – गृहमन्त्रिरूपेण मम दायित्वं तु भवान् पश्यत्येव। राजकीये अस्मिन् आवासे मम निवासस्यौचित्यमपि भवान् जानाति। अतः स्थायिरूपेण भवद्भिः सह निवासस्तु अव्यावहारिकः। परम्, अद्याहं भोजनानन्तरं भवद्भिः सह गमिष्यामि।

अरुणायाः पिताकथयत् – भोजनस्य व्यवस्थात्वस्माभिः गृहे एव कृतास्ति, अत इदानीमस्माभिः सह गन्तुं तत्परा भव।

अरुणा सचिवमाहूय तं तस्या गमनाय संविधानं कर्तुमादिशत्। अविलम्बमेव सुरक्षाकर्मिणः परिवारात् पूर्वमेव सुरक्षाविधानाय तस्याः पितुर्गृहं प्राप्ताः।

चर्चगेटक्षेत्रे राजकीयकर्मचारिभ्यो निर्मितेषु गृहेष्वेव एकं गृहमरुणायाः पितुरासीत्। मुम्बईमहानगर्यामरुणा एका प्रसिद्धा व्यक्तिरासीत्। गृहमन्त्रिरूपेण सुरक्षाकर्मिभिः परिवृतायास्तस्यास्तत्रागमनेन सर्वे प्रतिवेशिनः तस्याः पितुः परिवारस्य विशिष्टतामवागच्छन्। चिररात्रेण पितुर्गृहे कुटुम्बिनां मध्ये तेषां श्लाघापूर्णा दृष्टिर् अरुणामानन्दमग्नामकरोत्। पञ्चवर्षपूर्वमस्मिन्नेव कुटुम्बे सर्वे हेयदृष्ट्या तामपश्यन्। अद्य तु स्थितिः पूर्णतः परिवर्तिता वर्तते।

अरुणायाः पित्रोः स्नेहपात्रं करुणस्ताभ्यां सह मिश्रितोऽभवत्। भोजनानन्तरं करुणो यदा मातामहमातामहीभ्यां सह क्रीडासक्त आसीत्, अन्यस्मिन् कक्षेऽनुराधा अरुणा च परस्परं वार्तालापमग्ने अभवताम्। किञ्चित्काला

नन्तरम् अरुणाया मातापि तत्रैव आगता। अवसरं प्राप्यारुणाया मातावदत् – दीर्घेऽस्मिन् जीवनपथे एकाकिन्या न गम्यते। त्वं बुद्धिमती असि। अद्यैव करुणः स्वपितुर्विषयेऽपृच्छत्; तस्य प्रश्नः चिरकालं यावत् अपवर्तयितुं न शक्यते। अद्यास्ति उचितोऽवसरः। प्रमोदः पश्चात्तापयुक्तोऽस्ति। यदा स तव पार्श्वमागच्छेत्, प्रज्ञापूर्वकं विचार्य निर्णयं कुरु। केवलं क्रोधस्तु हानिकरो भवति। परस्परं संविदा सर्वं व्यवस्थितं भविष्यति।

इदानीं पर्यन्तं मौनं स्थितः अरुणायाः पिता तत्रागत्यावदत् – पुत्रि, त्वं कुटुम्बिनां मध्ये सर्वाधिकं शिक्षितास्ति अद्य पर्यन्तं तव इच्छा एंव सर्वैरनुमता अतिष्ठत्। मन्ये प्रमोदस्तवापराधी अस्ति। प्रवञ्चकस्य तस्य कृते तव क्रोधोऽपि उपपन्न एव, परं जीवने सुस्थितये तेन सह सामञ्जस्ये एव कल्याणं पश्यामि। रोगोपचाराय कटुकमप्यौषधं निगीर्यते। प्रमोदेन सह तव करुणस्य चावस्थितिः समाजे शोभनीया भविष्यति।

किञ्चित्कालं यावत् मनुष्यः, पुरुषो नारी वा, एकाकी स्थातुं शक्नोति, परमेकः काल आगच्छति यदा सहचरस्य साहचर्यमपरिहार्यं प्रतीयते। अधुना बुद्धिमती त्वं यथायोग्यं निर्णयं कुरु।

अरुणा पितुः कथनं सावधानमश्रृणोत्। पितुः प्रस्तावस्य सार्थकतां सापि अन्वभवत्, परं किमप्यनुक्त्वापि सम्मता इव तूष्णीमेव स्थिता।

सायंसमये सुरक्षाकर्मिभिः परिवृता अरुणा करुणेन सह स्वकीयं राजकीयमावासमागता।

**इति सप्तम उच्छ्वासः**

## अथ अष्टम उच्छ्वासः

प्रमोदस्य अरुणायाश्च अनुरागो वस्तुतो वितथो नासीत्, परममेरिकावासिनो महाधनस्य व्यवसायिन एकाकिन्या पुत्र्या सह विवाहेन तस्याः पितुर्विशालायाः सम्पदः प्राप्तेः सम्भावना तं पथभ्रष्टमकरोत्। लोभाभिभूतः सोऽरुणया सह आत्मनः प्रणयसम्बन्धान् पित्रोः समक्षं नाकथयन्, जूह्याः पितुः विवाहप्रस्तावं स्वीकृत्य अमेरिकादेशं प्रति प्रातिष्ठत।

पाश्चात्यसंस्कारेषु पोषिता वर्धिता च जूही भारतीयसंस्कारान् प्रति उदासीना आसीत्। पाश्चात्यः कामुको यः कोऽपि पुरुषः तस्या रुच्यनुरूपं तथाकथितां मैत्रीं प्रदर्श्य तस्याः सामीप्यं प्राप्नोत्, तेनैव सह कामक्रीडायां सा निःसङ्कोचं प्रावर्तत।

जन्मना संस्कारैश्च भारतीयस्तस्याः पिता कर्मचन्दमहोदयः पुत्र्या आचरणेन दुःखितः पुत्रीं सन्मार्गगामिनीं कर्तुं प्रमोदं पटियालातोऽमेरिकायामामन्त्रयत। प्रमोदेन सह विवाहानन्तरं तस्य पुत्री यथाकथं पाश्चात्यजगत उन्मुक्तान् संस्कारान् परित्यज्य कदाचित् सुसंस्कृता भवेदित्यासीत् मधुरा कल्पना जूह्याः पितुः।

विवाहसम्बन्धस्य शुचिता, शीलत्वं, समर्पणभाव, एतादृशेषु जीवनमूल्येषु जूह्या आस्था नासीत्। सा विवाहं जननान्तरसौहृदस्य परिणामं नामन्यत। सा स्वकीयं जीवनं कस्यापि पार्श्वे निक्षेपभूतं कृत्वा भारतीयविधिना विवाहे ऽनौचित्यम् अपश्यत्। जीवनस्य स्वातन्त्र्ये कीदृशी अपि बाधा तस्याः स्वीकार्या नासीत्।

पिता कर्मचन्दमहोदयस्तां समवाबोधयत् – पुत्रि, विवाह एकं पवित्रं बन्धनं भवति। देवताः साक्षीकृत्य स्वीकृतेऽस्मिन् बन्धने निबद्धौ दम्पती आजीवनं परस्परं समर्पणभावेन साहचर्यं कुरुतः। पश्य, तव मात्रा सह विवाहबन्धने बद्धोऽहम्; अस्माकमेष शोभनः परिवारो; विगतत्रिंशद्वर्षेभ्यः

तव माता मया सह निवसति, यावज्जीवनञ्चावामेवमेव परस्परं सुखदुःखयोः सहभागिनौ स्थास्यावः। परस्परमास्थां, विश्वासं, समर्पणभावञ्च आवयोर्जीवने त्वं पश्यस्येव।

एभिस्तर्कैरप्रभाविता जूही अकथयत् - मम मातुः समर्पणभाव एव तस्या दुर्बलता अस्ति। अनेकदा मतभेदे उपस्थितेऽपि, दुःखितापि सा समर्पण भावबद्धा भवन्तं त्यक्त्वा गन्तुं न पारयति। नाहमेतत्सोढुं शक्ता। सङ्कीर्णदृष्ट्यो भारतीयाः पुरुषाः स्वपत्नीम् अन्यैः सह भ्रमन्तीम्, आलिङ्गनबद्धां, चुम्बने सक्तां वा दृष्ट्वा क्रुद्धा जायन्ते, असभ्यास्ते पत्नीरूपेण दासीमिच्छन्ति। नाहं कस्यापि दासी भविष्यामि।

पिताकथयत् - पुत्रि, भारतीयानां मूल्यानां विषये तवैतादृशी धारणा न युक्तियुक्ता। परस्परं त्यागः, प्रेमभावः सेवाभावश्च बहुमूल्या सम्पत्। एषा एव सम्पद् जीवनस्य सार्थकतां प्रतिपादयति।

जूही अकथयत् - त्यागभावस्तु मम मित्रे बिले अपि पर्याप्तमात्रायामस्ति। गतमासे यदाहं ज्वरग्रस्ता आसं, स अन्येन कन्यामित्रेण सह अभिसारस्य कार्यक्रमं परित्यज्य सम्पूर्णायां रात्रौ मम कक्षे सेवारतोऽस्थात्।

पिताकथयत् - अभिसारार्थमनेके विकल्पा यस्य पार्श्वे सन्ति, नैतादृशः पुरुष एकपत्नीव्रतो भवितुमर्हति। भारतीयाः पुरुषा नार्यो वा यस्यापि मूर्तिं हृदये स्थापयन्ति, येन सह युक्ता भवन्ति, तदतिरिक्तेन नान्येन सह कदापि अभिसारादिविषये स्वप्नेऽपि चिन्तयन्ति। एष एव भारतीयसमाजस्य स्थिरताया आधारः। आर्थिकदृष्ट्या समृद्धोऽप्यमेरिकादेशो गृहस्थजीवनस्य स्थैर्यविषये भारतस्य तुलनायामस्थिरो वर्तते। प्रमोदनामकः भारतीयो युवा भारताद् अत्रागच्छति। तेन सह तव विवाहो मया प्रस्तावितः। उच्चशिक्षितः, चारुदर्शनो, वाग्मी, सदाचारः, कुलीनश्चासौ युवा विवाहायोपयुक्तः स्थास्यति, इति विचार्य मया सोऽत्राहूतः। त्वं तेन मिलित्वा यथायोग्यं निर्णयं कर्तुं शक्नोषि। तेन सह विवाहस्तव जीवनं स्वर्गतुल्यं विधास्यतीति मम विश्वासः। श्व एवासौ अत्र सम्प्राप्स्यति। सापि, आगच्छतु स, यथोचितं द्रक्ष्यामि इति कथयित्वा स्वकीयं कक्षं प्रविष्टा।

तेन सह कामसम्बन्धेषु प्रवृत्ताया धृतगर्भायाश्चारुणायाः किं भविष्यति,

इत्यादिविचारेषु कालोपक्षयं विनैव जूह्याः पितुः विशालाकारस्य उद्योगस्य लोभेनाकृष्टः प्रमोदः अमेरिकायां वैंकूवरं नगरम्प्राप्तः।

जूह्या गृहे तस्याः पिता कर्मचन्दमहोदयो, माता लक्ष्मीदेवी च प्रमोदम् अभ्यनन्दयताम्। प्रमोदस्यागमनकाले जूही गृहे एवासीत्। सा तं हंहो, एष मम पुरुषमित्रेण सह अभिसारार्थं निश्चितः कालः, अतः सायंकाले आवां मिलिष्याव, इत्युक्त्वा गृहान्निर्गता, दिनद्वयानन्तरमेव च प्रत्यावर्तिता।

एवं दिनद्वयानन्तरं प्रमोदेन सह औपचारिकतया परिचिता साकथयत् - भवानस्ति प्रमोदमहोदयो मया सह विवाहमिच्छन् इहायातः। स्वागतमत्र भवताम्। अपरिचितोऽयं देशो भवत्कृते, अहं त्वां वैंकूवरं भ्रामयिष्यामि।

अनुत्तम इव प्रमोदः किमप्यनुक्त्वैव जूहीं पश्यन् स्थितः। तस्य आततत्वम् अवबुध्य, तम् आततिमुक्तञ्च कर्तुं जूह्या माता लक्ष्मीः अवदत् - जूही त्वया सह भ्रमणार्थं बहिर्गमिष्यिति। परस्परं सम्पर्केण अन्योऽन्यमवगत्य युवयोर्मध्ये सम्बन्धानां प्रगाढता भद्रतरा भविष्यति।

प्रमोदोऽवदत् - युक्तं कथयति मातः, अहं जूह्या सह वैंकूवरं द्रष्टुं गमिष्यामि।

जूही प्रमोदश्च भ्रमणार्थं गृहान्निर्गतौ। एकस्मिन्नुद्यानेऽकस्मात् एकं मित्रं दृष्ट्वा जूही हंहो, इत्युक्त्वा तेन सहालिङ्गनबद्धाभवत्। परस्परमालिङ्गन चुम्बनानन्तरं जूही मित्रेण सह प्रमोदस्य परिचयमचीकरत् - एष अत्रभवान् प्रमोदमहोदयः, मम पितुरुद्योगे साहाय्यार्थं भारतादत्रागतः। एष फ्रैंकमहोदयो मम मित्रम्। फ्रैंकप्रमोदौ परस्परमभिवादनविनिमयमकुरुताम्।

हंहो आद्यनन्तरं, गते फ्रैंके, जूही प्रमोदश्च उद्याने अग्रेऽचलताम्। कुण्ठित इव प्रमोदो जूहीमपृच्छत् - आर्ये, किं भवती सर्वैरपि मित्रैः सह एवमेवालिङ्गन चुम्बनादिपूर्वकं मिलति ? भवत्या माता पिता च किं नैतदापत्तिकरं मन्येते ?

जूही आत्मनिष्ठापूर्वकं दृढतयावदत् - आपत्तेस्तु प्रश्न एव नास्ति। भिन्नानि सांस्कृतिकमूल्यानि भारतस्य अमेरिकायाश्च; अमेरिकायां युवानो युवत्यश्च मुक्तभावेन परस्परमालिङ्गनचुम्बनादिना स्नेहं प्रदर्शयन्ति; विवाहिता युवतिः यदि इच्छेत्, निःसङ्कोचभावेन स्वमित्रेण सह कामक्रीडायां प्रवर्तते; अत्र विषये पत्युः इच्छा अनिच्छा वा अल्पार्था निष्प्रयोजना च भवति।

प्रमोदोऽपृच्छत् – किं भवत्या माता पिता चापि स्वकीयैः पुरुषमित्रैः स्त्रीमित्रैर्वा सह कामसम्बन्धेषु एवमेव प्रवर्तेते ?

जूही उदतरत् – नैव, नैव, भारतीयसस्कारैर्ग्रस्तौ तौ अद्यापि भारतीयौ अतीतकालिके एव युगे जीवतः। तौ तु मम उपस्थितौ परस्परमालिङ्गनचुम्बनादिकमपि न कुरुतः। भवतां भारतम् अद्यापि पुराणरीत्यनुसारि वर्तते।

प्रमोदो व्यचिन्तयत् – जूह्या सह विवाहानन्तरं स तु तस्याः पितुर्व्यवसाये व्यापृतो भविष्यति, जूही स्वमित्रैः सह स्वातन्त्र्येण भ्रमणार्थं गमिष्यत्येव; तस्याः कामसम्बन्धेष्वपि मर्यादायाः प्रश्न एव नास्ति; प्ररूढगर्भा जूही कथं ज्ञास्यति यत् तस्या गर्भे कस्य बीजमङ्कुरितं तिष्ठति! एतद् बीजं बिलस्य, अन्यस्य वा कस्यचित् पुरुषमित्रस्यापि सम्भवति, परं पुत्रस्तु स प्रमोदस्यैव भविष्यति।

षण्मासावधिपर्यन्तं प्रमोदो वैंकूवरे ज्यूह्या गृहे न्यवसत्। एतस्यां कालावधौ सदैव सङ्कोचशीलो, भारतीयसंस्कारैर्युक्तः प्रमोदः फ्रैंकादिभिरनेकैर्मित्रैर्निरन्तरम् आलिङ्गितां, चुम्बितां, कामक्रीडनमिव च प्रयुक्तां जूहीं नैकवारमपि आलिङ्गितुं चुम्बितुं वा अशक्नोत्। स जूहीं सन्मार्गगामिनीं कृत्वैव अधिकारसम्पन्नः पतिरिव विवाहानन्तरं तया सह कामप्रसक्तो भवितुमैच्छत्। नैकवारं स, तस्या दृष्ट्या पुराणरीत्यनुसारिणामतीतकालिकानाञ्च भारतीयसंस्काराणां महत्त्वं प्रतिपाद्य मित्रैः सह उन्मुक्तकामव्यवहारात् जूहीं निरोद्धुं प्रायतत, परं जूही प्रमोदं भारतादागतम् अतिथिं मन्यमाना तस्य प्रबोधान् उपन्यासांश्च सदैव अपदेशेन व्यपानुदत्।

एकस्मिन् दिने प्रमोदो जूही च पण्यवीथ्यां भ्रमन्तौ अकस्मात् बिलम् अपश्यताम्। जूहीं दृष्ट्वैव बिलः अकालक्षेपेण तां दृढमालिङ्ग्य वारं वारमचुम्बत्। यावत् प्रमोदः किंकर्तव्यविमूढ एवासीत्, बिलेन मुक्ता जूही पुनः स्वयं तमालिङ्गनबद्धं कृत्वा तस्याधरपानं कर्तुमारभत। एतद्दृष्ट्वा अधिकारभावेन जातामर्षः प्रमोदो जूहीं मुखे चपेटयाहन्। प्रतिक्रियारूपेण क्रुद्धो बिलोऽपि प्रमोदं मुष्टिकाप्रहारैरताडयत्। उपस्थिते जनसम्मर्दे केचन जना विवादस्य कारणमपृच्छन्। उत्तरे प्रमोदः तस्य भाविपत्न्या जूह्या बिलेन सह उन्मुक्तं कामव्यापारं विवादस्य कारणमकथयत्। एतच्छ्रुत्वा पुनः क्रुद्धा

जूही सर्वेषां मध्ये प्रमोदेन सह एतादृशं सम्बन्धं प्रत्यादिशत्। प्रमोदेन सह विवदमाना जूही गृहं प्राप्य तत्कालं मातरमकथयत् – मातः, भवतामतिथिः अयमसभ्यः प्रमोदः अद्यैवास्माकं गृहं परित्यजतु। घृणापात्रमयं मम। अनेन सह विवाहस्य तु प्रश्न एव नास्ति।

अत्रान्तरे कर्मचन्दमहोदयस्तत्रागच्छत्, विवादस्य कारणञ्चापृच्छत्। जूही उदतरत् – स्वयं प्रेमक्रीडासु पूर्णतया अक्षमोऽयमसभ्यो भवतामतिथिः बिलेन सहापि आलिङ्गनचुम्बनादिषु प्रवृत्तां मां चपेटिकयाहन्। अद्यैव भारतं प्रत्यावर्तयितव्योऽयं क्लीवः। नितरामनुष्णेन पौरुषविहीनेन चानेन सह का नारी विवाहं करिष्यति ? घृणास्पदमयं कापुरुषः। इत्यादिश्य जूही स्वकक्षं प्रविष्टा।

अतिशयेन लज्जितः प्रमोदो जूह्याः पितरमकथयत् – नैतदासीदनवगतं भवतो यत् जूही एवमुच्छृङ्खलस्वभावास्ति यत् शिष्टरीत्यनुसारिणं पुरुषं सा क्लीवं मन्यते, भारतीयता च तस्या दृष्ट्या असभ्यता, पुराणरीत्यनुसरणञ्चास्ति, उन्मुक्तभावेन परपुरुषैः सहालिङ्गनचुम्बनादिकं सा शिष्टाचारं मन्यते, तदा मादृशेन भारतीयेन सह तस्या विवाहस्य भवतां कल्पनापि अनौचित्यपूर्णा आसीत्। यदि भवान् अतिगर्विताया मदोद्धतायाश्च स्वपुत्र्याः कृते एकं भारतीयमनुचरं क्रेतुमिच्छति, नाहं सः। अहं तत्कालं भारतं गन्तुमिच्छामि। कृपया मम प्रत्यावर्तनस्य व्यवस्थां कारयतु भवान्। यथा त्वमिच्छसि, तव प्रत्यावर्तनस्य व्यवस्थां कारयामि, इत्युक्त्वा कर्मचन्दमहोदयस्तूष्णीमभूत्।

प्रत्यागमनकाले वायुयाने शिरः पृष्ठभागे स्थापयित्वा निषण्णके उपविष्टो, निमीलितनयनः प्रमोदो विचारतरङ्गेषु निमज्जनुन्मज्जंश्चाचिन्तयत् – यां जूहीं सकलसुखसम्पत्तिवसतिं मन्यमानः अरुणां तिरस्कृत्य, कुटुम्बिनः परित्यज्य दूरदेशं गतः सा तु सकलदुःखानामायतनं प्रमाणिता। अरुणया सह व्यतीताः क्षणाः चलचित्रमिव स्मृतिसंसारे विचरतस्तस्य कल्पनायां सजीवा इवाभवन्–

एकदा कस्मिंश्चिदुद्याने दीर्घासने उपविष्टारुणा तेन सह वार्तामग्नासीत्। समक्षं गच्छन् कोऽपि युवा अनिमेषदृष्ट्या तां पश्यन् निर्गतः। 'तत्र पश्य, तव सौन्दर्यस्य प्रशंसको गच्छति', मया इत्युक्ते सा उदतरत् – प्रमोद, मदीयासु कल्पनासु केवलं त्वमेवासि, नाहं त्वदतिरिक्तमन्यं कमपि जनं प्रणयदृष्ट्या

द्रष्टुमिच्छामि; त्वामतिरिच्यान्यस्य कस्यचिदपि एतादृशी दृष्टिर्न मां प्रसादयति, अपितु तुदत्येव। त्वां पृच्छामि, त्वं कथय, यदा कश्चिदन्यः तव समक्षं मामेवं पश्यति, किं तव हृदये क्रोधस्य भावो नोत्पद्यते ?, कापि युवतिः यदि प्रणय भावेन त्वां पश्यति, नाहं क्षन्तुं शक्नोमि। प्रणये विभागो न सम्भवति। मम जीवने अद्वितीयस्त्वमद्वितीय एव स्थास्यसि; न कोऽप्यन्यः प्रणयिदृष्ट्या मम जीवने प्रवेशमर्हति। अहमीश्वेरण तव कृते निर्मिता, त्वदीयैव स्थास्यामि। तवापि चाविभक्तं प्रेम केवलं ममैवास्ति, न काप्यन्या समांशिनी सम्भवति।

एकदा विश्वविद्यालयपरिसरे वार्तालापक्रमे अहं तामकथयम् – अरुणे, आवां न केवलं प्रगाढप्रेममग्ने मित्रे, अपितु विवाहानन्तरं पतिपत्नीरूपेण आवयोरवस्थितिरपि निर्विवादा, अद्य किञ्चित्कालम् एकस्य मित्रस्य निर्जने गृहे एकान्ते तव साहचर्यस्यानन्दं भोक्तुमिच्छामि। मम प्रस्तावं श्रुत्वा तस्या उत्तरं स्पष्टमासीत् – प्रमोद, अहं विवाहानन्तरमेव आत्मानं त्वां समर्पयितुम् इच्छामि। परिणय एकः पवित्रः सम्बन्धः। विवाहात्पूर्वं कामसम्बन्धैर्नाहमात्मनः शरीरम् अपवित्रं करिष्यामि। अहमद्यापि तवैवास्मि, विवाहानन्तरमपि तवैव स्थास्यामि, आवां विवाहात् पूर्वं संयमस्य महत्त्वं न कदापि विस्मरिष्यावः।

स्मृतिसागरे मग्नः प्रमोदः तद् दिनमस्मरद् यदा सोऽकस्मात् तस्या गृहमगच्छत्, सा च गृहे एकाकिनी आसीत्। पित्रोरनुपस्थितौ तामतिरिच्य विजने गृहे आगतं मां दृष्ट्वा अस्तव्यस्ता, विस्मयाकुला च सा स्वेदाप्लुता अभिनन्दयन्ती अपि मां निवर्तितुं प्रार्थयत। नाहमपरिचित, आवां भाविदम्पती स्वो, दैवेनोपब्धोऽवसरो नैवं व्यर्थयितव्यः, चिरप्रणयिनौ आवामद्य किञ्चित्कालं यावत् निर्बाधं प्रणयाभिव्यक्तिं करिष्याव, इति पुनः पुनः प्रार्थनानन्तरमेव सा यथाकथञ्चित् समक्षमुपविष्टा आसीत्। यदाहं तामालिङ्गनबद्धां कर्तुं प्रायते, सङ्कोचशीला स्वेदक्लिन्नमुखी सा 'प्रथमम् ईश्वरं साक्षिणं कृत्वा पत्नीरूपेण मां स्वीकुरु' इत्येवं मां प्रार्थयत।

तस्याः पाणिं गृहीत्वा अहमकथयम् – अद्य ईश्वरं साक्षिणं कृत्वा त्वामरुणामहं पत्नीरूपेण स्वीकरोमि। अद्यारभ्य दुःखे सुखे च सर्वदैव आवां परस्परं सहचरौ स्थास्यावः। सावदत् – आर्य, पत्नीरूपेण त्वया वृताहमाजीवनं त्वदीयैवास्मि। त्वदतिरिक्तो न कोऽप्यन्यः पुरुषो मम जीवने प्रवेशमर्हति।

पतिव्रताहं तव परिवारस्य परिचर्यायामेव जीवनं यापयिष्यामि। त्वमपि प्रतिजानीहि यत्त्वं सदैव एकपत्नीव्रतो भूत्वा मया सह सदाचारयुक्तं जीवनं यापयिष्यसि। अहमपि अकथयम् – अहमीश्वरं साक्षिणं कृत्वा प्रतिजानामि यत्सदैव एकपत्नीव्रतः स्थास्यामि।

तस्मिन् दिने सर्वप्रथमं मया आलिङ्गनबद्धा चुम्बिता च सा मामकथयत् – आर्य, अद्य ईश्वरं साक्षिणं कृत्वा त्वया परिणीताहं पत्नीरूपेणात्मानं त्वां समर्पयामि। अद्यारभ्य एतन्मदीयं जीवनं केवलं तवैवास्ति। यद्यपि कुटुम्बिनां मध्ये समाजे अग्निं परितो भ्रमित्वा नावयोर्विवाहः सम्पन्नः, परं सर्वान्तर्यामी ईश्वर आवयोर्विवाहस्य साक्षी अस्ति। तदनन्तरं मया सह कामक्रीडारताया स्तस्या मनसः पवित्रतां, तस्याः समर्पणभावञ्च स्मृत्वा अद्य मम मनो रोदिति।

जूह्याः पितुः सम्पदो लोभाकृष्टेन तां वञ्चयित्वा अमेरिकां गच्छता मया, यत्सत्यम्, अतिनिकृष्टमाचरितम्। हीरकं त्यक्त्वा न केवलं पाषाणाय मया हस्तः प्रसारितः, अपितु अकृतापराधां, निर्मलचित्तां, निष्कपटां, निष्पापामरुणां प्रति सकपटं व्यवहरता मया अक्षम्यं पापाचरणं कृतम्।

सर्वा घटनाः चलचित्रमिव तस्य कल्पनासु पुनर्नवा इवाभवन्। मम गृहमागता; सरलहृदया सा मामकथयत् यत् सम्भवतः सा आपन्नसत्त्वास्ति; शपथग्रहणपूर्वकं पत्नीरूपेण परिणीतायास्तस्या वचनमपवर्तयता मया जघन्यं पापमाचरितम्। तस्याः पिता मम पित्रोः समक्षमागत्य यदा एतत्सत्यमुदघाटयत् तदा आत्मानं पृथक्कुर्वता मया यद्घृणितमाचरितं, अक्षम्योऽयं ममापराधः। एवं चिन्तयन् प्रमोदः अश्रूणि व्यमुञ्चत्।

कुलमर्यादाम्प्रति अवहितचेता अरुणा न किमपि प्रतिकूलमाचरत्। मत्त आपन्नसत्त्वा, मया प्रतारिता, मया तिरस्कृता, निरपराधा, शुचिव्रता अरुणा कथमेतं विपत्तिसागरमतरत् नाद्याहं जानामि। मया प्रवञ्चितया तया सम्भवतो गर्भस्रावः कारितो भवेत्, अन्येन वा केनचित् सह सा विवाहिता भवेत्।

जूह्या प्रत्याख्यातोऽहमद्य अरुणायाः त्यागं, तस्याः सतीत्वं, तस्या दृढं सौहृदञ्च स्मरामि। धिक् मामनधिकारिणं मूढं योऽरुणां प्रत्यादिश्य जूहीं प्रासुं गतः। वायुयाने स्वकीये संवेशे स्थितः शनैः शनैः अश्रूणि विमुञ्चन् प्रमोदः कल्पनायामेव चपेटाघातैरात्मानमहन्।

अरुणाया गर्भे स्थापितमात्मनोऽपत्यं स्मृत्वा अतिशयेन व्याकुलः प्रमोदोऽचिन्तयत् – यदि विवशयारुणया गर्भस्त्रावः कारितो भवेत् तदा अहं स्वयमेव आत्मनः सन्ततेर्घातकोऽभवम्। केनचिद् विवाहिता चेत्, मम सन्ततिः कस्यचिद् अन्यस्य पुरुषस्यापत्यरूपेण पोषिता भविष्यति।

पुनः प्रमोदोऽचिन्तयत् – अहं तु प्रवञ्चकोऽस्मि यद् धनलोभेन सगर्भामरुणां परित्यज्यामेरिकां गतः, परम् अरुणा तु एवंविधा नास्ति; न सा कमप्यन्यं पुरुषं पतिरूपेण स्वीकरिष्यति। दृढसंकल्पस्वभावारुणा गर्भस्त्रावमपि न कारयिष्यति। दयादाक्षिण्यादिगुणैः सम्पन्ना, विमलात्मा, सत्यवादिनी अरुणा गर्भस्त्रावं न कदाप्याज्ञापयिष्यति। एवं चेत् ईश्वरं साक्षीकृत्य विवाहितया प्यविवाहितया, जीवितेऽपि पत्यौ पतिविहीनया तया सन्तानजन्मपीडा कथं सोढा भवेत्! विचार तरङ्गेषु प्रवहन् प्रमोद एवं चिन्तयन् अश्रूणि अमुञ्चत्।

प्रमोदोऽस्मरत् – यदा स स्वपित्रोः समक्षम् अरुणाया जनकमकथयत् – ''आवयोर्मध्ये प्रणयसम्बन्धस्य तु प्रश्न एव नास्ति। शुभाचारा अरुणा कथं केन च सगर्भाभवत् नाहं किमपि जानामि।'' सोऽचिन्तयत् किं तस्य सदृशः असत्यवादी, प्रवञ्चको दुष्टः, कृतघ्नो, विश्रम्भघाती, प्रतारकोऽन्यो भवितुं शक्नोति! तदा नासौ एतादृशस्य व्यवहारस्य परिणामविषयेऽचिन्तयत्। तस्याः पित्रा सहापि मम एतादृशं शाठ्ययुक्तं व्यवहारं ज्ञात्वा किं चिन्तितं भवेदरुणया! अवश्यमेव सर्वेषामेव घृणापात्रमहमक्षम्योऽपराधी। जूही मां नपुंसकमकथयत्। ईश्वरं साक्षीकृत्य गांधर्वविवाहेन परिणीतां, सरलां, पतिव्रतां, सगर्भां पत्नीं प्रत्यादिश्य धनलोभेन विदेशं प्रस्थितोऽहं नपुंसक एवास्मि। सुशीलायाः सदाचारिण्या अरुणायाः तिरस्कारस्य एवैतत्फलं यत् जूही मम तिरस्कारम् अकरोत्। जूह्या तिरस्कृतोऽहमधुना भारतं प्रत्यावर्तितोऽस्मि। अधुना अरुणायाः समक्षं कथं स्थास्यामि! कथं पुनर् अरुणायाः पित्रोः समक्षं गत्वा कथयिष्यामि यद् अहमेवास्मि अरुणायाः सन्ततेः पिता! सर्वेऽपि धिक्करणीयं मां कापुरुषं कथयिष्यन्ति। अपराधस्य दण्डोऽपि मयैव भोक्तव्यः। अहं हि अरुणायाः पादयोः पतित्वा क्षमां याचिष्ये। सा हि भारतीया नारी; प्रवञ्चकमपि, कितवमपि, अप्रत्येयमपि. मामवश्यमेव क्षंस्यते।

**इति अष्टम उच्छ्वासः**

## अथ नवम उच्छ्वासः

प्रमोदस्य प्रत्यागमनात् पूर्वम् अरुणा पटियालानगरं परित्यज्य कुटुम्बिनां कृते विलुप्ताभवत्। शिमलानगरे प्रसवानन्तरं मुम्बईमहानगर्यां जनसम्मर्दे अन्तरिता सा तैरगम्या अज्ञाता चाभवत्।

गृहं प्राप्य प्रमोदेन सर्वप्रथमं स्वपित्रोः समक्षं सर्वं यथार्थतः स्वीकृतम्। तत्पश्चात् अरुणाया गृहं गत्वा तस्याः पित्रोः पितृष्वसुश्च समक्षं सर्वं वृत्तान्तम्, आत्मनः अपराधञ्च स्वीकृत्य अरुणया सह विवाहाय स्वकीयं निर्णयं तान् अकथयत्। प्रमोद आत्मनः कुकृत्याय क्षमां याचितुम् अरुणां द्रष्टुमैच्छत्, परमरुणायाः कुटुम्बिनः अरुणा कुत्र निवसति, इत्यादिविषये अनभिज्ञा आसन्। एतादृश्यामवस्थायाम् अहम् आजीवनम् अविवाहित एव स्थास्यामि, इति निर्णयं सर्वान् अकथयत्।

दीर्घकालानन्तरं यदा अरुणाया पत्रेण तस्याः समाचारं कुटुम्बिनः अवागच्छन् तदा पत्रे – 'अहमत्र कुलीनविधवारूपेण शिक्षाक्षेत्रे राजनीतिक्षेत्रे च प्रतिष्ठितास्मि। भवतामत्रागमनेन रहस्ये उद्घाटिते सति सर्वमेव विपरीतं भविष्यति। अतः केवलं पत्रद्वारेणैव भवद्भिः कुशलक्षेमसन्देशः प्रेष्यः।' – एवमुल्लेखेन सर्वे तूष्णीमेव स्थिताः।

निर्वाचनेषु अरुणाया विधानसभासदस्यरूपेण विजयस्य समाचारः समाचार माध्यमैः विस्तरेण प्रकाशित आसीत्। तस्या महाराष्ट्रराज्यस्य गृहमन्त्रिरूपेण शपथग्रहणस्य समाचारो दूरदर्शने पौनःपुन्येन प्रसारितोऽभवत्। प्रथमवारं राजनीतिक्षेत्रेऽवतीर्णायाः स्वर्णपदकालंकृतायाः पी-एच.डी. उपाधिधारिण्या अरुणाया नैकोऽपि प्रतिद्वन्द्वी लग्नकमपि रक्षितुमपारयत्, एतं समाचारं प्रमोदः, प्रमोदस्य मातापितरौ, अरुणायाश्च कुटुम्बिनो वारं वारमशृण्वन्। अनेनैव समाचारेण प्रमोदः अन्ये च सर्वे कुटुम्बिनः अरुणाया विषये सर्वमजानन्।

अरुणाया एषोऽभ्युदयः सर्वेषाम् एव आश्चर्यस्य विषय आसीत्। अधुना अरुणा काचिद् विलुप्ता व्यक्तिर्नासीत्। अरुणा महाराष्ट्रराज्यस्य गृहमन्त्रिपदम् अलङ्करोति इति सर्वे प्रतिवेशिनः, कुटुम्बिनः, सम्बन्धिनश्च सुष्ठु अजानन्।

अत्रान्तरे अरुणायाः पितुः स्थानान्तरणं मुम्बईमहानगर्यामभवत्। तेषां पटियालातः प्रस्थानात्पूर्वं प्रमोदः अनुराधायाः पार्श्वं गत्वा तस्याः समक्षं स्वमनोभावान् प्राकटयत् – अहमरुणायाः समीपं गत्वा, आत्मनः सर्वमपराधं स्वीकृत्य, क्षमायाचनाञ्च कृत्वा तस्याः समक्षम् आत्मसमर्पणं कर्तुमिच्छामि। यदि सा मां क्षमते, तदा अवस्थानुकूलं तस्या आदेशानुसारं समाजस्य समक्षं तया सह विवाहं कृत्वा पुत्रेण सह तस्याः परिचर्यायां जीवनं यापयिष्यामि। यदि सा मां तिरस्करोति, तदा तस्याः प्राप्तं तिरस्कारमेव अपराधस्य दण्डरूपेण स्वीकृत्य आजीवनं दूरं स्थित्वैव तस्याः प्रतीक्षां करिष्यामि। अद्य यावद् अरुणाया विषये न किमपि ज्ञातमभूत्, अत एतावत् कालपर्यन्तं एकाकी एव प्रायश्चित्ते लग्नोऽभूवम्। अहमपि शीघ्रमेव भवतोऽनुपदम् अरुणायाः पार्श्वं यास्यामि। मदीयेयं प्रार्थना अस्ति यद् भवती मम गमनात् पूर्वं मदीयां मनोव्यथां, मदीयं प्रायश्चित्तभावं, मोहभङ्गञ्च अरुणायै कथयित्वा तस्या हृदि मां प्रति दयाभावं जनयतु।

पुनश्च, एकान्ते अरुणायाः समक्षं गच्छेयम्, एतादृशं साहसं नास्ति मयि। अरुणां विनात्वहं नितान्तं शक्तिहीनः, अपराधभावग्रस्तः, साहसहीनः कापुरुष इवास्मि। अत्रभवत्या एव कृपया मम नौका पारं गन्तुं शक्नोति।

प्रमोदोऽरुणायाः पित्रोः समक्षं, पादयोः पतित्वा, सर्वं मनोगतमकथयत्। सोऽरुणया सह विवाहस्य स्वकीयं दृढं सङ्कल्पमपि स्पष्टमकरोत्। अहं सर्वप्रथमं क्षमायाचनया तस्याः क्रोधं शमयितुमिच्छामि, तदनन्तरमनुकूल व्यवहारेण तस्याः सद्भावं प्राप्य, पुत्रञ्च अङ्के निधाय तस्य मुखेन पिता इति श्रोतुमिच्छामि।

एकस्मिन् दिने गृहमन्त्रालयस्य कार्यालये अरुणायाः सचिव इण्टरकॉम माध्यमेन तामसूचयद्यत् पटियालात आगतो डॉ. प्रमोदनामकः कश्चित् नागरिको भवत्या दर्शनमिच्छति। एतच्छ्रुत्वा स्तब्धा क्रुद्धाचारुणा यथाकथम् आत्मानं संयतां कृत्वा तमकथयत् – तमान्तरिके प्रतीक्षाकक्षे सादरमुपवेशय। तदारुणा

उच्चाधिकारिभिः सह महत्त्वपूर्णविषयेषु विमर्शे संलग्ना आसीत्। यथाशीघ्रं एतस्मात् समागमात् निवृत्य, एकान्ते सति, निमीलितनयना, कथं तेन सह व्यवहर्तव्यम्, इति विचारमग्ना अभवत्।

पटियालात आगतो डॉ. प्रमोदः स एव सम्भवति। षड्वर्षाणि पश्चात् अमेरिकानिवासिन्या युवत्या तिरस्कृतः, प्रत्याख्यातः, असौ प्रतारको निर्लज्जो भूत्वा अत्रागतः। मम सचिवः, कारचालको, रक्षापुरुषाश्च पटियालानगरत आगतं मम पितुः परिवारं जानन्ति। द्वारादेव तिरस्कृत्य प्रत्याख्यातश्चेत् पटियाला सम्बन्धेन इमं मम सम्बन्धिनमेव प्रत्याख्यातं मत्वा कदाचित् मामेवाहङ्कारिणीं मन्येरन्। घृणापात्रमयं प्रमोदो न मम सहानुभूतिमर्हति। ईश्वरं साक्षिणं कृत्वा गांधर्वविवाहेन परिणीतां मामन्तर्वत्नीं कृत्वा, पश्चात्, लोभाविष्टो यो मया सह सम्बन्धमेव मूलतः प्रत्यादिशत्, नैष कितवो जीवने यथार्थं सन्मित्रं प्रणयी पतिर्वा प्रमाणितो भविष्यति। एतादृशानां स्वार्थिनां जनानां व्यवहारो यथावसरं परिवर्तते।

गृहमन्त्रालयस्य आन्तरिके प्रतीक्षाकक्षे अरुणामवलोकयितुं प्रतीक्षारतः प्रमोदः सरलहृदयायाः शुचिव्रताया अरुणाया अभ्युदयं, तस्या ऐश्वर्यं, शक्तिं, प्रभावञ्च दृष्ट्वा, एकान्ते तया सह गांधर्वविवाहानन्तरमपि, तामापन्नसत्त्वां कृत्वापि, तां प्रवञ्च्य लोभाविष्टत्वात्तां प्रत्यादिश्यामेरिकां गतस्य आत्मनश्च दुरवस्थां विचिन्त्य होराद्वयं यावत् आत्ममन्थने मग्नोऽस्थात्।

एवं विचारपरम्पराकुलौ द्वावपि स्वे स्वे कक्षे विश्लेषणे व्यापृतावास्ताम्। अन्ततः पञ्चवादनकाले अरुणा इण्टरकॉममाध्यमेन सचिवमादिशत् – आगन्तुकं प्रवेशय। क्षणानन्तरमेव प्रमोदो अरुणाया सम्मुखं स्थित आसीत्।

प्रमोदं दृष्ट्वा विचाराणां प्रवाहं विस्मृत्य, अकस्मात् स्वेदक्लिन्नावयवारुणा सजलनयना इङ्गितेन आसनग्रहणार्थं प्रमोदं प्रार्थयत। अरुणायाः समक्षमुपविष्टः प्रमोदः सगद्गदमश्रूणि व्यमुञ्चत्, नैकोऽपि च तयोः किमपि वक्तुमशकत्। किञ्चित्कालानन्तरमरुणावदत् – कृतघ्नो, वञ्चकः, कितवः, अविश्रब्धश्च त्वं मां क्लेशयितुं कथं पुनरत्राप्यागतः। मया बहूनि दुःखान्यनुभूतानि। केवलं क्षणिकसुखार्थं मया सह गांधर्वविवाहस्य नाटकं रचयित्वा शारीरिकसम्बन्धे तव प्रवृत्तिः मां कीदृशेऽपयशसः विपत्तीनाञ्च गर्तेऽपातयत् त्वमेतदनुभवितुं

न शक्नोषि। पुरुषस्त्वं क्षणिककामतृप्त्यै आत्मनः अंशं मम गर्भे स्थापयित्वापि विस्मर्तुं शक्नोषि, मूलतः सम्बन्धमेव प्रत्याख्यातुं शक्नोषि, मत्कृते तु नास्य सम्भवः। अधुना मां यथावस्थितां त्यक्त्वा गच्छ, गच्छ अपुनरागमनाय।

प्रमोदोऽकथयत् – अरुणे, यदपि त्वं कथयसि सर्वं सत्यम्। अहं तवापराधी अस्मि। स्वकीयान् सर्वानपराधान्, सर्वाणि कुकृत्यानि स्वीकरोमि; दण्डनीयः अस्मि। अपराधक्षमायाचनार्थं तव पार्श्वमागतोऽस्मि।

अरुणाकथयत् – नैतद्भवितुमर्हति। परम्, एष कार्यालयः, अश्रूणि प्रोञ्छ्य सुस्थो भव, अहमपि सुस्था भवामि। आवां गृहं गच्छावः, तत्रैव जलपानं कृत्वा मां च यथास्थितां परित्यज्य गच्छ अपुनरागमनाय। एवमुक्त्वा इण्टरकॉम माध्यमेन सचिवमादिशत् – चालकम् अङ्गरक्षकांश्चादिश।

शीघ्रमेव शान्तौ भूत्वा अरुणा प्रमोदश्च कार्यालयाद् बहिरागतौ। अङ्गरक्षकः कारयानस्य द्वारमुदघाटयत्। अरुणा प्रमोदं प्रथमं प्रवेशाय प्रार्थयत, अनन्तरञ्च स्वयं प्रविष्टा। क्षणान्तरे अङ्गरक्षकाणां सुरक्षाकर्मिणाञ्च कारयानैः पुरस्तात् पृष्ठे च परिवृता अरुणा अचिरेण स्वकीयं राजकीयं गृहं प्राप्ता यत्राङ्गरक्षकः पूर्वमेव कारयानस्य द्वारमुद्घाटयितुं स्थित आसीत्। यानादवतीर्य द्वावपि गृहं प्रविष्टौ।

अरुणायाः प्रवेशेन सहैव गृहस्थाः कर्मचारिणः चेष्टाशीला अभवन्। अरुणा प्रमोदेन सह आन्तरिकं उपवेशनकक्षं प्राविशत्।

अरुणायाः सङ्केतेन सेवकः चायमल्पाहारञ्च फलके पर्यकल्पयत्। विषण्ण मना अरुणा इङ्गितेन प्रमोदं चायमल्पाहारं च ग्रहीतुं प्रार्थयत। म्लानवदनः प्रमोदः चायपानं कुर्वन् अवदत्–अरुणे, तवाभ्युदयं दृष्ट्वा अतिशयेन प्रसन्नोऽस्मि। मदीयेयं करबद्धा प्रार्थना यत् मां क्षमस्व। एवं कथयन् प्रमोदः चायचषकं फलके निधाय अरुणायाश्चरणयोः पपात, सगद्गदञ्चारोदीत्। अंसयोर्गृहीत्वा तमुत्थापयन्ती अरुणा स्वयमपि रुदती अवदत् – प्रमोद, स्मर तं दिवसं यदा मम पिता तव गृहं गत्वा त्वदेव धृतगर्भायाः मम विवाहप्रस्तावं तव पित्रोः समक्षं प्रास्तौत्, त्वं मया सह सम्बन्धमेव प्रत्यादिशः। त्वया प्रत्याख्यातया मया यानि कष्टानि अनुभूतानि तानि तु कल्पनातीतानि सन्ति। दैवेन अद्याहं विपत्तिसागरमुत्तीर्य समाजे राजनीतिक्षेत्रे च प्रतिष्ठितास्मि। समाजे

कुलीनविधवारूपेण जना मां जानन्ति। त्वया सह मम सामञ्जस्यं कथं सम्भवति? एका विधवा नारी केनापि पुरुषेण सह यदि निवसति समाजस्तां कलङ्किनीं कथयति। तदा त्वया त्यक्ताहं कलङ्किनी आसम्, इदानीं त्वया सह कलङ्किनी भविष्यामि। त्वञ्च कयाचिदन्यया जूहीसदृशयाकृष्टो मां त्यक्त्वा पुनर्गमिष्यसि। नाधुना मामतोऽधिकं खेदय, मयि दयां कुरु, नाहमतोऽधिकं दुःखं सोढुं क्षमा। उपविश, चायपानं कुरु, गच्छ च अपुनरागमनाय।

प्रमोदोऽवदत् - अरुणे, अहं तव प्रत्येकं कथनं समर्थये; निश्चितमेव जघन्योऽयं ममापराधः; परमपराधिनां कृते दण्डस्य व्यवस्था तु भवत्येव। अहं जाने दयासागररूपासि त्वं, अधुना क्षमस्व मां, प्रसीद च। एवं कथयन् प्रमोदो निजकरेण अरुणाया अश्रूणि प्रोञ्छितुं प्रायतत, परमरुणा झटिति पृष्ठेऽभवत्, तं च आसने उपवेष्टुं दृढमादिशत्। वराकः प्रमोदः अनुचर इव आज्ञामपालयत्।

अत्रान्तरे गृहस्य पृष्ठभागे स्थिते क्रीडाक्षेत्रे धात्र्या सह कन्दुकेन क्रीडित्वा आगतः करुणः कक्षे प्रविष्टः। अरुणा च करुणं दृढं परिष्वज्य अतिशयेन सगद्गदमरोदीत्। कक्षे स्थितमपरिचितं पुरुषं दृष्ट्वा, मातरञ्च एवं रुदतीं दृष्ट्वा, मम्मा!!! इत्युच्चरन् करुणोऽपि रोदितुमारब्धवान्।

असामान्यं किञ्चिदनुभूय किंकर्तव्यविमूढः सचिव एकतस्तु रक्षापुरुषान् सतर्कानकरोत्, अथच दूरभाषेण मुख्यमन्त्रिणं कौण्डकरमहोदयमसूचयद् यदस्ति किञ्चिदसामान्यं येन आर्याया डॉ. अरुणाया, आगन्तुकस्य अतिथेः, करुणस्य च रोदनशब्दो बहिः श्रूयते; अनाहूतश्चाहं आन्तरिककक्षे प्रवेष्टुं न शक्नोमि। अकालक्षेपेण च सुरक्षावाहनैर्परिवृतं मुख्यमन्त्रिणः कारयानमरुणाया गृहं प्राप्नोत्। आर्यः कौण्डकरश्च अरुणाया आन्तरिकम् उपवेशनकक्षं प्राविशत्।

अकस्मात् कौण्डकरमहोदयं कक्षे उपस्थितं दृष्ट्वा विस्मयाकुला अरुणा अभ्युत्थानविधिना स्वागतं व्याहरन्ती अपि सजलनयना एवासीत्। सजल नयनमेव अपरिचितं पुरुषमरुणायाः कक्षे दृष्ट्वा व्याकुल इव कौण्डकरमहोदयो ऽरुणामपृच्छत् - अपि सर्वं कुशलम् ? तस्य प्रश्नेन विचलितारुणा पुनरनियन्त्रित मरोदीत्। किमप्यवबोद्धुमक्षमः स स्वकीयमासनं परित्यज्य अरुणायाः समीपमागत्य तस्याः शिरसि स्नेहेन स्वहस्तं प्रसार्य तां रोदनस्य कारणमपृच्छत्।

किञ्चित्कालानन्तरं स्वस्था अरुणा, जलं पीत्वा, अवदत् – आर्य, भवान् मम संरक्षकोऽस्ति। विगतपञ्चवर्षेभ्योऽत्रभवतां संरक्षणे स्थिताहं स्वकीयं दुःखस्य कालं यथाकथमयापयम्। भवतां संरक्षणाभावे मम का अवस्था स्यात् को जानाति! अद्य यावत् भवानपि मां विधवारूपेणैव जानाति, परं नाहं विधवा, भवतां समक्षमुपस्थित एष डॉ. प्रमोदमहोदयो मम पतिरस्ति। एकान्ते गृहे ईश्वरं साक्षीकृत्य अनेन परिणीताप्यहं समाजे, कुटुम्बिनां दृष्टिषु, अविवाहिता एव। एष मम पुत्रस्य करुणस्य पिता अस्ति। एवमरुणा कौण्डकरमहोदयं साद्योपान्तं सर्वं विस्तरेण कथयित्वावदत् – अद्य एष क्षमां याचितुमत्रागतः, परं मम हृदये घनीभूताया घृणायाः पात्रमेष प्रमोदो नास्ति क्षमायाः पात्रम्।

इदानीं यावत् अरुणायाः पार्श्वे स्थित आश्चर्यचकित इव, भीत इव करुणः प्रमोदं पश्यन् अरुणामपृच्छत् – मम्मा, कोऽत्रभवान् ? करुणस्य प्रश्नेन व्याकुला अरुणा स्नेहेन तमकथयत् – करुण, अद्य यावत् अनेकवारं त्वं मामपृच्छः 'कोऽस्ति मम पिता ?' तव समक्षमुपस्थित एष डॉ. प्रमोदमहोदयः तव पिता अस्ति। अभिवादय पितरम्। उद्विग्न इव, किञ्चिद् भीत इव करुणः प्राञ्जलिर्भूत्वा मन्दं मन्दमवदत् – नमस्ते।

सर्वेषां मध्ये अपराधीव करबद्धो जडवत् स्थितः, सजलनयनः प्रमोदः पिपासिताभ्यां नयनाभ्यां करुणं पश्यन् पुनर्बद्धाञ्जलिर्भूत्वा न किमपि वक्तुमशकत्।

कौण्डकरमहोदयः कदाचित् करुणं, कदाचित् प्रमोदं, कदाचिच्चारुणां पश्यन्नवदत् – अतिविचित्रेयं स्थितिः। आर्य प्रमोद, यदपि भवता आचरितं नैतत्प्रशस्यम्। परमद्य पश्चात्तापयुक्तो भवान् क्षमां प्रार्थयमानोऽत्रागतः, किमहं कथयितुं शक्नोमि। जीवितेऽपि भवति करुणेन युक्ता अरुणा अद्य यावत् विधवा इव समाजे स्थातुं विवशासीत्, एष दुःखस्य विषयः। जीवितेऽपि पितरि एष निर्दोषः करुणः पितृविहीन इव अनुभवति, एष अधिकतरं दुःखस्य विषयः। पुनररुणां पश्यन् अकथयत् – आर्ये, धात्रीमाहूय करुणं क्रीडनाय तया सह अन्यस्मिन् कक्षे प्रेषय। म्लानमुखः सोऽत्र उदासीन इव, व्याकुल इव स्थितोऽस्ति। इण्टरकॉम माध्यमेनाज्ञप्ता धात्री करुणमनयत्।

गते करुणे कौण्डकरमहोदयोऽरुणामवदत् – आर्ये, भवती कथयति यद्

भवत्या हृदि डॉ. प्रमोदमहोदयस्य कृते घनीभूता घृणा व्याप्तास्ति। घृणायाः कारणं विद्यते, अत उचितं भवत्याः कथनम्। परं मम हृदि शङ्का उत्पद्यते। डॉ. प्रमोदो भवत्या दर्शनार्थं सचिवालये आगतः। प्रथमतस्तु भवत्या अनुमतिं विना अस्य भवत्याः कार्यालये प्रवेशमसम्भवं मन्ये। अतः स्पष्टं, भवत्या अनुमत्या एव एष कार्यालयं प्रविष्टः। पुनश्च भवती आत्मनो राजकीये कारयाने एनमत्रभवत्या गृहम्, आन्तरिकम् उपवेशनकक्षञ्च आनयत्। भवत्या व्यवहारेण एतत्प्रतीयते यत् हृदि व्याप्ता घनीभूता घृणापि डॉ. प्रमोदमहोदयं भवत्याः पृथक् कर्तुं नाशकत्।

यदि विचारयामः, कोऽस्माकं घृणापात्रं सम्भवति ? वस्तुतः सर्वाधिकं प्रिय एव सर्वाधिकं घृणापात्रं सम्भवति। डॉ. प्रमोदमहोदयः पूर्वमपि भवत्याः प्रणयपात्रमासीत्; अद्याप्येष भवत्याः सर्वाधिकं प्रणयपात्रमस्ति। विगत पञ्चवर्षेभ्यः अत्रभवती मम सम्पर्केऽस्ति। राजनीतिशास्त्रस्य विदुषी, महाविद्यालये प्रतिष्ठिता प्राध्यापिका, मम सचिवरूपेण समाजे भवत्याः प्रतिष्ठितं स्थानं, भवत्याः सौन्दर्यं, यौवनं, भवत्याः सङ्केतमात्रेण सर्वोत्तमो युवापि भवत्या सह विवाहं कृत्वात्मानं धन्यमेव मन्येत। परं भवत्या कदाप्यस्मिन् विषये न चिन्तितम्। अहं जाने, नैकोऽपि पुरुषोऽद्य यावत् भवत्या हृदि प्रवेशं प्राप्नोत्। एतत्सर्वं कथम् ? कारणं स्पष्टमस्ति, अद्यापि अत्रभवती डॉ. प्रमोदमहोदयमेव सर्वाधिकमात्मीयं मन्यते, एतमधिकृत्य भवत्या हृदि घनीभूता घृणा यथार्थतो घनीभूतः प्रणय एवास्ति। वस्तुतोऽद्य यावत् भवत्या नयने प्रमोदमहोदयस्यैव प्रतीक्षायां लग्ने आस्ताम्।

पुनश्च प्रमोदं सम्बोध्य अवदत् – महोदय, यदपि भवताचरितमत्यन्तं निन्दनीयमस्ति। भवतः प्रवञ्चनापूर्णेन व्यवहारेण अस्या देव्या जीवनमेव परिवर्तितम्। यदि भवन्तं परित्यज्य एषा देवी केनचिदन्येन अधिकमुपयुक्तेन यूना विवाहिता स्यात्, कीदृशी स्यादत्रभवतः प्रतिक्रिया ?

यदि भवानाज्ञापयति किञ्चित्प्रार्थयितुमिच्छामि, प्रमोदोऽवदत्। कथयतु कथयतु भवान्, इत्येवं कौण्डकरमहोदयेनानुमतः प्रमोदोऽकथयत् – मदीयम् आचरणमनुपयुक्तं निन्दनीयञ्चासीत्, इत्यहमपि स्वीकरोमि, परम् अमेरिकातः परावृत्य, तदारभ्य पञ्चवर्षपरिमिते काले अस्या एव प्रतीक्षायां लग्नोऽद्याहमस्याः

शरणमागतो, निर्बन्धेन क्षमां प्रार्थये। अद्यापि अस्या एवेच्छा सर्वोपरि वर्तते। यद्येषा इच्छेत्, अनया सह अस्याः करुणस्य च परिचर्यायां जीवनं यापयिष्यामि, अन्यथा, आजीवनमस्याः प्रतीक्षायां स्थास्यामि। विधिना एवं लिखितमासीत्। यद्येतत्सर्वं नाभविष्यत् अद्यैषा महाराष्ट्रराज्यस्य गृहमन्त्री अपि नाभविष्यत्। अस्या गृहमन्त्रिपदं दैवेन निश्चितमासीत्। मदीयः प्रवञ्चनापूर्णो व्यवहारोऽस्या अभ्युदये निमित्तमात्रमभवत्। दैवेनैव मदीया मतिर्भ्रष्टा कृता। अतो मदीयो ऽपराधो निश्चितमेव क्षन्तव्यः। वस्तुतस्त्वहं कठोरदण्डेन पूर्वमेव दण्डितोऽस्मि। मम पुत्रो मां पितृत्वेन न प्रत्यभिजानाति। परं, मत्कृते तु अरुणाया निर्णय एव सर्वोपरि वर्तते। प्रमोद एवं कथयित्वा तूष्णीमभवत्।

कौण्डकरमहोदयोऽवदत् – आर्ये अरुणे, युक्तं कथयति डॉ. प्रमोद महोदयः। दीर्घाः सन्ति जीवनस्य पन्थानः, नैकेन गन्तुं शक्याः। नारी पुरुषो वा, अन्योऽन्यं विना उभावपि अपूर्णावेव भवतः। अथच करुणस्यापि प्रश्नो भवत्याः समक्षम् अस्ति। मात्रा सह पितुरपि संरक्षणं तस्य सामाजिक प्रतिष्ठायै श्रेयस्करम्।

अरुणाकथयत् – अत्रभवान् मम संरक्षकोऽस्ति। भवतां मार्गदर्शने एव एतावत्पर्यन्तं न केवलं सुरक्षिता जीविता च, अपितु अभ्युदयं प्राप्ता। यद्भवानुचितं मन्यते तदेव कल्याणकरं भवेत्। परमस्मिन्निर्णये करुणस्य इच्छा, मम पित्रोः पितृष्वसुश्च सहभागिता अपि अपेक्षितास्ति।

उचितं कथयति अत्रभवती। करुणस्येच्छा अवश्यं ज्ञातव्या। परिवारजनान् च आहूय तेषां सहमत्या एव निर्णयः क्रियताम्। अस्मिन् शुभावसरे डॉ. प्रमोदमहोदयाय मुम्बईमहाविद्यालये भवत्या रिक्तं प्राध्यापकपदम् उपहरामि। श्वः परश्वो वा महाविद्यालयं गत्वा प्राध्यापकपदस्य कार्यभारं गृह्णातु अत्रभवान्।

सम्वादनसमये मम निवासस्थाने उच्चाधिकारिणामेकः समागमो निश्चितः। भवद्भिरनुज्ञातोऽहमधुना गन्तुमिच्छामि। अरुणा प्रमोदश्च मुख्यमन्त्रिमहोदयं गृहद्वारपर्यन्तं प्रापयताम्। ताभ्यां विसृष्टः अङ्गरक्षकैः परिवृतः कौण्डकर महोदयः कारयानेनागच्छत्।

कौण्डकरमहोदयमनुमन्त्र्य अरुणा प्रमोदश्च आन्तरिकं उपवेशनकक्षम् आगतौ। एकान्तं प्राप्य अनायासमेवालिङ्गनबद्धयोस्तयोः सर्वं मनोमालिन्यमश्रु

जलधाराभिः प्रक्षालितम्।

तदा इण्टरकॉममाध्यमेन सङ्केतिता धात्री करुणमानयत्। अरुणा करुणं वात्सल्येनोत्सङ्गे निधायापृच्छत् – करुण, एष ते पिता, कीदृशः प्रतिभाति ? करुण उत्सुकतया प्रमोदं पश्यन् तूष्णीमेव स्थितः। अधुना प्रमोदः आसनादुत्थाय पार्श्वमागत्य करुणं बाहूभ्यामुत्थाप्य वात्सल्यमभिवर्षन् अवदत् – पुत्र, अहं ते पिता, इयं ते माता, त्वम् आवयोः पुत्र; इति कथयित्वा स्नेहेन तमचुम्बत्। करुणो बालसुलभया गिरापृच्छत् – पितः, अद्य यावत् कुत्रास्थात् भवान् ? प्रमोद उदतरत् – पुत्र, अधुना आगतोऽहं कदापि न गमिष्यामि।

अरुणा दूरभाषेण मातरं सर्वं वृत्तान्तमकथयत्, तान् सर्वान् च स्वयमागत्य यथोचितं निर्णयार्थमधिकृतानकरोत्। अरुणा कारयानस्य चालकं कतिपय सुरक्षाकर्मिणश्च पितुः परिवारं तत्रैवानेतुं प्रैषयत्।

अरुणा प्रेम्णा प्रमोदमवदत् – आर्य, मम परिवारजना आगच्छन्ति। तेषां समक्षमहं तूष्णीं स्थास्यामि। अधुना मया स्वजीवननौका तव हस्ते समर्पिता, अतो मम परिवारजनानां समक्षं भवानेव सर्वं प्रस्तोष्यति।

शीघ्रमेवारुणायाः पितरौ पितृष्वसा च तत्रागताः। प्रमोदः प्रणिपातपूर्वकम् अभ्यर्हणीयान् तान् अभ्यनन्दयत्। तेऽपि आशीर्वचोभिस्तस्याभ्युदयकामनाम् अकुर्वन्। अथच, करबद्धं स्वागतं व्याहरन्तीं भावाभिभूतां किंकर्तव्यविमूढतया विमोहिताामिव अरुणां सस्नेहं परिष्वज्य स्वस्तिवचनैस्तस्याः कल्याणम् अकामयन्त, करुणञ्च उत्सङ्गे उत्थाप्य वात्सल्येनाचुम्बन्।

अभिवादनानन्तरं आरब्धे हि वार्तालापक्रमे प्रमोदोऽत्यन्तं विनम्रतया सर्वेषाम् उपस्थितौ अवदत् – भवन्तः सर्वे मम श्रद्धेया, अत्रभवतां समक्षम् अद्यैतत् स्वीकरोमि यदरुणा षड्वर्षपूर्वम् ईश्वरं साक्षिणं कृत्वा परिणीता मम पत्नी अस्ति। करुणश्च मम पुत्रः। दैवेच्छया भ्रान्तबुद्धिरहं यदप्यनुचितमाचरं मम सर्वमपराधं कृपया क्षमन्तामत्रभवन्तः।

अरुणायाः पिता अवदत् – पुत्रि अरुणे, कृतपश्चात्तापः प्रमोदो विगतपञ्च वर्षेभ्यः तवैव प्रतीक्षायां तपश्चरन् तिष्ठति। इदानीमेष क्षमां याचते, त्वमधुना विगतं सर्वं विस्मृत्य करुणेन प्रमोदेन च सह सौभाग्यसम्पन्ना भव। अरुणाया माता अवदत् – पुत्रि, दैवेन वियुक्तौ युवां दैवेनैव पुनः संयुक्तौ, सर्वं मनोमालिन्यं

विस्मृत्याभ्युदयसम्पन्नं दाम्पत्यं प्रणयताम्। करुणो भवतोर्जीवनोद्यानं सुगन्धितं कुर्यात्। अनुराधावदत् भवतोर्वियोगोऽपि अभ्युदयनिमित्त आसीत्। अधुना प्रमोदेन करुणेन च सह अभ्युदययुक्तं सौभाग्यं प्राप्नुहि।

ईषत्स्मितमवकिरन्ती अरुणा किमप्यनुक्त्वैव आत्मनः सम्मतिम् अभिव्याञ्जीत्।

विदुषा पुरोहितेन निश्चिते शुभे मुहूर्ते अग्निं साक्षीकृत्य अरुणायाः प्रमोदस्य च विवाहः अतिशयशोभासम्पन्नेन विधिना सम्पन्नः। मुख्यमन्त्री कौण्डकर महोदया, महामहिमशालिनो राज्यपालमहोदयाः, सम्पूर्णं मन्त्रिमण्डलं, सर्वे विधायका, उच्चाधिकारिणः, चलचित्रनगर्या अभिनेतारः, अभिनेत्र्यः, अन्ये च समाजस्य सम्माननीयाः सदस्या अस्मिन् विवाहोत्सवे सम्मिलिता अभवन्। सर्वे करुणेन प्रमोदेन च सह अरुणायाः सौभाग्यमकामयन्त।

मङ्गलं पाठकानां स्यात् प्रणेतुश्चापि मङ्गलम्।
मङ्गलं भगवान्कुर्यात्सर्वेषां च विपश्चिताम्।।

**इति नवम उच्छ्वासः**

प्रातःस्मरणीयानां श्री पं. रामानन्दशर्मणाम्पौत्रेण
प्रकाण्डविदुषां श्री पं. बलदेवकृष्णशर्मणां
वात्सल्यमूर्त्याः श्रीमत्याः कृष्णादेव्याश्च पुत्रेण
शिरोमणिसाहित्यकारसम्मानेन समलंकृतेन
डॉ. महेशचन्द्रशर्मणा गौतमेन
विरचितोऽयम्
'अरुणा' उपन्यासः सम्पन्नः।

* * *

## शब्दकोषः

अजिज्ञासन्त – जानने की कोशिश की
अतिनिर्बन्धेन – अत्यधिक आग्रहपूर्वक
अतिसंहिता – अत्यधिक सम्बद्ध, अत्यधिक नियमानुसार चलाई जाने वाली, वञ्चित
अदृष्टापराधा – मासूम, निर्दोष
अनतिक्रान्तमर्यादः – मध्यमार्गी (moderate)
अनालापी – शब्दों से अनभिव्यक्त (silent)
अनिर्वृता – बेचैन (restless)
अनुतिष्ठति – चला रहा है (discharging)
अनुमन्त्र्य – विदा करके (after bidding adieu)
अनुयोगाधीनः – देखरेख में
अनुयोज्यता – जिम्मेदारी (responsibility)
अन्तरिता – खोई हुई, डूबी हुई (lost)
अन्तर्गृहम् – भीतरी कमरे में
अन्तर्वत्नी – सगर्भा (pregnant)
अन्तश्छादानि – छतें (ceilings)
अन्तिमं नत्वल्पिष्ठम् – Last but not the least
अन्वमन्त्रयत – सम्मानपूर्वक विदा किया (अनु मन्त्र् – to bid farewell)
अपक्रोशः – गाली
अपक्वशाकादिकम् – सलाद
अपदेशेन – बहाने से
अपमन्येरन् – सम्भव है अपमान करें (अप+√मन ज्ञाने, विधिलिङ्, प्र.पु., ब.व.)
अपरतः – दूसरी ओर

अपराधिजगत् - अण्डरवर्ल्ड
अपवर्तयितुं न शक्यते - टाला नहीं जा सकता (can not be averted)
अपवाचकस्य - मुकर जाने वाले
अपहारम् - गबन embezzlement को
अपांशुला/अपांसुला - पवित्र (chaste)
अपानुदत् - टाल गई (averted)
अपावर्तनम् - पीछे हटना
अपाश्रयायाः - बेसहारा (के लिए)
अपैक्षत - प्रतीक्षा करने लगा (अप+√ईक्ष दर्शने, लङ्, प्र.पु., ए.व.)
अप्रत्ययस्य - भरोसे के अयोग्य के
अप्रबोधनीया - जिसे सान्त्वना देना बहुत कठिन था
अभिध्यानम् - सोचना
अभिनिविष्टाम् - खोई हुई को, विचारों में डूबी हुई को, पृ. 21
अभिमन्त्रिता - मन्त्रबद्ध (spell bound)
अभियोज्यता - जिम्मेदारी (responsibility)
अभिविराजयन्त्यः - चमकती हुई
अभ्याक्राम्यन् - कब्जा कर लिया
अभ्युक्षिताः - भीगे हुए
अभ्युपगमाय - सौदे के लिए
अभ्युषान् - चपातियों को
अयन्त्रयत - नियन्त्रण किया
अयानम् - ठहराव, पड़ाव
अरुन्तुदवाचा - मर्मभेदी वाणी से
अर्थतः - सचमुच
अल्पार्घ - सस्ता
अल्पार्था - महत्त्वहीन
अवगमः - धारणा
अवतमसम् - सन्ध्या का झुटपुटा

अवरोधस्य – बन्द का, हड़ताल का, पृ. 20
अवर्तिष्णूनि – अस्तित्वहीन
अवहितचेताः – सतर्क (mindful)
अवितथम् – सत्य, सही
अविधिकः – ग़ैर कानूनी
अविश्रम्भस्य – अविश्वसनीय के
अव्यवहितम् – अगला (next)
आचिख्यासन्तीव – कहना चाहती हुई सी (आ√ख्या प्रकथने, सन्, शतृ, स्त्री.,इव)
आततत्वम् – तनाव (tension)
आततिः – तनाव (tension)
आपतनशीलानाम् – अकस्मात् घटित हो जाने वाली
आप्रथमात् विजयं यावत् – आरम्भ से विजयपर्यन्त
आमन्द्रस्वरेण – हल्के गम्भीर स्वर में
आरूढानि कृत्वा – रिकार्ड करके
आसन्दिकायाम् – सोफे पर
आसेचनकेन – आंखों को सुख देने वाले, जिसे देखते हुए मन तृप्त न हो ऐसे (यौवन से) पृ. 35
आस्थाने – स्टेशन पर
ईषत्परिमाणम् – कुछ हद तक (to some extent)
ईषद्विश्लथः – कुछ ढीला
उत्क्लेशम् – घबराहट, बेचैनी
उपकल्पनम् – तैयारी (preparation)
उपगृहम् – आउट हाऊस annexe
उपन्यासेन – प्रस्ताव से
उपवेशनशालायाम् – ड्राइंग रूम में
उपस्पृशन् – ओठों से स्पर्श करते हुए
उपायपरिकल्पना – योजना (scheme)
ऋजीषम् – कड़ाही को
एषिषिषति – बार बार मन करता है

औपयिकम् - उचित

कन्दौ - चूल्हे पर

कर्मिष्ठा - व्यस्त

कितवः - धूर्त

कुशलवादः - मुबारकवाद

कुहका - झूठी (hypocritical)

कृच्छ्रेण - कठिनाई से

केशबन्धः - जूड़ा

कौशेयकञ्चुलिकायाः - रेशमी ब्लाउज़ से

क्रीडाक्षेत्रम् - स्टेडियम (stadium)

क्षेपणी - पतवार

गणभोजनाय - पिकनिक के लिए (गणभोजनम् - समूह भोजन, पिकनिक)

गणाधिपतिः - गैंग लीडर (डॉन)

गुर्वर्थः - महत्त्वपूर्ण

चमसेन - चम्मच से

चषकः - कप, प्याला

चिकीर्षितम् - लक्ष्य

चिररात्रेण - लम्बे समय के बाद

चूर्णकुन्तलाः - जुल्फें

छायाकारः - फोटोग्राफर

जनसमागमः - भीड़-भाड़ , जलसा

जनसमूहः - संगठन

जनयात्रा - जुलूस (procession)

जवानिलः - झंझावात (storm)

जिजागरिषुः - जागने की इच्छा रखने वाला

झौलिके - पर्स में

डलकम् - डाली (Basket)

तमङ्गकः - छत (terrace)

दर्व्या - कड़छी से

दीर्घासने - बैंच पर

दोषविस्मरणव्यवस्था - आम माफी की व्यवस्था (Amnesty)

द्रोणी - प्लेट, ट्रे

द्वारप्रकोष्ठके - पोर्टिको में

ध्वनिसम्पुटे - कैसेट में

नभोमण्डलम् - planetarium

निगीर्यते - निगली जाती है

निरवशेषम् - पूरी तरह से

निर्बन्धशीलः - जिद्दी

निर्बन्धेनोपदेशाय - मन में बैठाने के लिए

निर्व्यलीकम् - सत्य

निशमनकारिणः - श्रोताओं को

निषण्णके - सीट पर, कुर्सी पर

निष्पत्तिपूर्वम् - प्रभावशाली ढंग से (effectively)

नैकोऽपि प्रस्तरोऽपरिवर्तितस्त्यक्तव्यः - प्रयास में कोई कमी नहीं छोड़ी जानी चाहिए (No stone should be left unturned)

नैयमिक - मान्यता प्राप्त

नोपपद्यते - उपयुक्त नहीं है

पणार्पकः - ठेकेदार (contractor)

पत्रादेशः - पता

पदिकमार्गे - फुटपाथ पर

पराचीना - मुख दूसरी ओर करके

परिग्रहीतुम् - सम्मिलित करने हेतु

परिच्छदम् - सामान

परिणाहम् - विस्तार को, फैलाव को, सीमा को

परिधिस्थः - अङ्गरक्षक (body guard)

परिमृष्टा - आलिङ्गनबद्ध की गई

परिसंख्यातम् - गणना किया हुआ (estimated)
(न) परिषिस्वङ्क्षते - गले लगने की इच्छा नहीं होती (परि+√ष्वञ्ज्, सन्नन्त)
पर्पे - पहियों वाली कुर्सी पर (wheel chair पर)
पर्यकल्पयत् - सजा दिया
पर्यनुयोगः - खण्डन करने की इच्छा से पूछताछ-अनुसन्धान
पर्यवञ्चयत - ठग लिए (परि +√वञ्चु प्रलम्भने, लङ्, प्र.पु., ए.व.)
पर्यहरत् - छोड़ देती थी, दृष्टिविगत कर देती थी, पृ. 35
पर्युपतिष्ठ - सेवा करो
पिठरेषु - केतलियों में
पिष्टकः - बिस्कुट (biscuit)
पूर्वभुक्तिः - व्यस्तता (pre-occupation)
पृष्ठवंशहीनः - रीढ़ की हड्डी से रहित
पैरासीटामोलविप्रुषैः - पैरासीटामोल की बूंदों से
प्रचयः - ढेर
प्रजोपप्लवस्य -- प्रजा पर जुल्म के
प्रज्ञप्तीः - व्यस्तताओं (engagements) को
प्रणयति स्म - चला रही थी, पृ. 13
प्रणीयमानानाम् - चलाये जा रहे
प्रतारयन् - धोखा देता हुआ
प्रतिक्रियामपैक्षत - प्रतिक्रिया की इन्तज़ार करने लगा
प्रतिजानतोऽपि - वादा करते हुए का भी
प्रतिपुरुषाः - एजैण्ट
प्रतिमानानि - उदाहरण, नमूने
प्रतियुद्धस्य - मुकाबले की (of encounter)
प्रतिश्रवः - वादा
प्रतिश्रुत्य - वादा करके
प्रत्यपादयत् - डाल दिया (consigned), पृ. 106
प्रत्यश्रृणोत् - वादा किया

प्रत्यादिशत् – इन्कार कर दिया
प्रत्यायिका – विश्वास दिलाने वाली
प्रत्यैयत – प्रतीत होने लगा (प्रति+√इण् गतौ, कर्मवाच्य, लङ्, प्र. पु., ए. व.)
प्रथमचरणखण्डे – प्राथमिक (primary) विभाग में
प्रबोधः – उद्बोधन (awakening)
प्रलम्बयितुम् – स्थगित (suspend) करने के लिए
प्रवासीयगृहम् – होटल
प्रश्रवणानि – झरने (fountains)
प्रस्थापितेन – भेजे गये (sent) पृ. 2
प्रात्ययिकः – जामिन (guarantee)
प्राथमकल्पिकाः – प्रथम वार इस क्षेत्र में प्रवृत्त होने वाले (Freshmen)
प्रान्तोन्मीलिताः – खुले हुए
प्रावारके – चोले में
प्रासजत् – चिपक गया (प्र+√षञ्ज सङ्गे (to embrace, to cling to, to fasten) लङ्, प्र. पु., ए. व.)
प्रेङ्खोलयन्ती – झुलाती हुई
प्रेष्ठः – सर्वाधिक प्रिय (प्रिय + इष्ठन्)
प्रेष्ठे – प्रेष्ठा (जंघा) द्वितीया द्विवचन
फलके – मेज़ पर
फुप्फुसदाहस्य – न्यूमोनिये की
बोधपूर्वम् – जानबूझ कर
महार्था – महत्त्वपूर्ण
मृष्टः – सहन किया
यथानिदेशम् – अनुशंसा के अनुरूप
यथामार्गम् – ठीक
यथार्थवैकल्यम् – वाक्छलपूर्वक बात को टालना (prevarication)
यामघोषा – घड़ियाल
रङ्गजीवकान् – अभिनेता/अभिनेत्रियों को
राजक्षमा – आम माफी (Amnesty)

लग्नकः - जमानत राशि (security deposit)
वक्ष्यतः - वहन करेंगे (√वह प्रापणे, लृट्, प्र. पु., द्विवचन)
वमन्ति - उगलने वाले (वमत् (√वम उद्गिरणे, शत्रन्त), द्वितीया बहुवचन)
वाग्विशिष्टतां गतः - मुखर हुआ
वाचंयमः - अनभिव्यक्त, ख़ामोश (silent)
विचिकित्सा - सन्देह, चूक (hesitation)
वितथतया - झूठ के कारण
वितुषान् कुर्वती - छीलती हुई
विनियुज्य - नियुक्त करके
विनियोगः - नियुक्ति (appointment)
विनिर्धूतानाम् - बिखेरे हुए, त्यागे हुए
विनिवेशितव्यानि - (मन में) बैठा लेने चाहिएं, स्थापित कर लेने चाहिएं
विन्ययोजयत् - नियुक्त कर दिया
विपर्यस्ता इव - बदली हुई सी, भ्रमित सी
विप्रकीर्णाः - बिखरे हुए
विप्रथितः - बढ़ा, प्रसिद्ध हुआ
विभावितम् - कल्पना की
विवमिषा - बार बार जी मितलाना
विश्वजनीये विद्यालये - पब्लिक स्कूल में
विसृष्टः - विसर्जित हो गया
विस्मापिका - आश्चर्यजनक (स्त्री.) (wonderful, marvellous)
वीथिकाः - (दूरदर्शनवीथिकाः, समाचारवीथिकाः) दूरदर्शन के चैनल
व्ययुनक् - काट दिया
व्यवस्था - व्यवस्था शब्द का प्रयोग इन्तज़ाम अर्थ में किया गया है
व्यातन्वन् - विस्तार पाने लगे, अंगड़ाई लेने लगे (stretched), पृ. 58
व्यामिश्रः - मिश्रित, घुला मिला
व्यामोहयत् - चक्कर में डाल दिया, मूर्ख बना दिया, पृ. 29
व्यामोहात् - परेशानी से, पृ. 71

व्यूहक्रमेण – मोर्चाबन्दी करते हुए
शयनपरिच्छेदस्य – स्लीपर भाग के
शरावम् – ट्रे को
शाणपुटात् – थैले से
शिल्पनिर्मितः – बनावटी (artificial)
शिल्पशाला – कारखाना (factory)
शिष्टरीत्यनुसारिणी – फैशनप्रिय (modish)
शेमुषी – समझदारी, बुद्धि
श्रपयन्ती – पकाती हुई (√श्रा पाके, णिच्, शत्रन्त)
श्लक्ष्णक्षणेषु – कमज़ोर क्षणों में
श्वःश्रेयसः– आने वाले समय के कल्याणयुक्त होने के कारण प्रसन्न
संगठनम् – हिन्दी के 'संगठन' शब्द का प्रयोग संस्कृत में भाषा विकास की दृष्टि से है।
संरम्भपूर्वम् – उत्साह के साथ (with excitement)
संविद् – समझौता (agreement)
संविधानम् – इन्तज़ाम
संवेशयोः – दो कुर्सियों पर
संशितव्रता – निष्ठायुक्त, वफ़ादार (faithful)
संश्रवाः – ठेके (contracts)
संसज्य – लिपटकर (सम् + √सञ्ज् सङ्गे to embrace, to cling to + ल्यप्)
सकुल्या – समान कुल की, रिश्तेदार
सप्रमाणीकृत्य – पास करके
सभाजयामि – स्वागत करती हूं
सभाजयितुम् – वितरित करने के लिए
सभ्यरीत्यनुसारी – फैशनप्रिय (modish)
समयः – शर्त पृ. 16
समवायस्य – ग्रुप का
समवेताः – इकट्ठे हुए (assembled)
समस्या – कठिनाई (प्रायः प्रचलित/विकसित सामान्य अर्थ कठिनाई ही है)

समांशिनी – हिस्सेदार (partner)
समाख्या – प्रसिद्धि (reputation)
समाप्लुतोऽभवत् – भीग गया
समाश्लिष्यम् – आलिङ्गन में ले लिया, (सम्+आ+√श्लिष–लङ्, उ. पु., एकवचन)
समुक्षिता – भीगी हुई
समुपचितम् – इकट्ठा हुआ
समेतः – एकत्रित (assembled)
सम्पुटकः – डिब्बा (Box)
सम्प्रत्यजानात् – सम्यक् रूप से वचन दिया
सम्भावयन्ति – आदर करते हैं
सविलासम् – सुरुचिपूर्ण ढंग से (elegantly)
सहवर्तनम् – सह अस्तित्व (co existence)
साद्यस्कतया – तुरन्त (immediately)
सान्द्रयोः कपोलयोः – स्निग्ध, चिकने, कोमल गालों पर
सामयितुम् – शान्त करने के लिए (√साम सान्त्वप्रयोगे+तुमुन् )
सामान्यराजसभाकक्षे – दीवान–ए–आम में
सार्द्धसप्तक्रोशम् – साढ़े सात कोस/पन्द्रह मील
सिद्धानि – ready made पृ. 86
सिद्धार्थतः – सफलतापूर्वक
सुकन्दकान् – प्याजों को
सुरेखा – सुन्दर नयन नक्श वाली, लावण्यवती (elegant)
स्थूलमानम् – मोटा अनुमान (rough estimate)
स्ववहिता – सावधान (alert)
स्वेदनिकायाम् – तवे पर
हंहो – हेलो
हिन्दोलकाः – झूले

* * *

# प्रणेतुः परिचयः



डॉ. महेशचन्द्रशर्मा गौतमः (प्रचलितं नाम – डॉ. महेश गौतमः)
(पंजाबसर्वकारेण शिरोमणिसंस्कृतसाहित्यकारसम्मानेन समलंकृतः)

| | | |
|---|---|---|
| जन्मतिथिः | – | 24.12.1949 |
| पिता, माता | – | श्री बलदेवकृष्णशर्माणः (स्व.), श्रीमती कृष्णा देवी (स्व.) |
| जन्मस्थानम् | – | सनौरीगेट, पटियालानगरम् |
| शिक्षा | – | शास्त्री, एम. ए. (संस्कृत एवं हिन्दी), पी–एच. डी. संस्कृत |
| व्यवसायः | – | हरियाणासर्वकारस्य शिक्षाविभागतः हिन्दीप्रवक्तृरूपेण सेवामुक्तः |
| स्थायिनिवासः | – | गौतक मार्किट, सनौरी गेट, पटियालानगरम्। |

## अन्याः कृतयः

| | पुस्तकम् | प्रकाशकः |
|---|---|---|
| 1. | पंजाब का संस्कृत काव्य को योगदान<br>(दिल्लीस्थराष्ट्रियसंस्कृतसंस्थानस्यार्थिकेनानुदानेन प्रकाशितो ग्रन्थः) | निर्मल पब्लिकेशन्स् दिल्ली |
| 2. | मूकं निमन्त्रणम् (नवीनकवितासंकलनम्) | डीसेन्ट पब्लिशर्स दिल्ली |
| 3. | ऋग्वेदः (दशममण्डलम्) हिन्दीभाष्यम् (द्वौ खण्डौ) | भुवन वाणी ट्रस्ट, लखनऊ |
| 4. | संस्कृत कावि विच सिक्ख गुरु साहिबान दी महिमा (Punjabi translation by Mr. Rupinder Singh) | गुरुनानकदेव मिशन पटियाला |
| 5. | श्री गुरुनानकदेवचरित (पटियालास्थसिखअकादम्या आर्थिकानुदानेन प्रकाशितम् हिन्दीभाषायां रचितं चरितकाव्यम्) | निर्मल पब्लिकेशन्स् दिल्ली |
| 6. | ऐसे जिया जाता है (हिन्दीकाव्यसंकलनम्) | निर्मल पब्लिकेशन्स् दिल्ली |
| 7. | स्वातन्त्र्यसमर महाकाव्य<br>(हिन्दीभाषायां रचितम् ऐतिहासिकं महाकाव्यम्) | प्रकाशनाधीनम् (Under the aegis of I.C.H.R. New Delhi) |
| 8. | डॉ० शिवप्रसादभारद्वाजविरचितस्य 'सिंहनादः' काव्यस्य हिन्दीभाषायां पंजाबी भाषायाञ्च व्याख्या, अनुवादः | अप्रकाशितम् |